प्रत्ययनिपातागमादेशाः॥सिध्यति। सूत्रं तर्हि भिद्यते॥ यथान्यासमेवा
ननु चोक्तं 'हलन्त्ये सर्वप्रसङ्गः सर्वान्त्यत्वा'दिति ॥ नैष दोषः। आहा
'हलन्त्यमित्संज्ञं भवती'ति, सर्वश्च हल्तं तमवधिं प्रत्यन्त्यो भवति,
प्रकर्षगतिर्विज्ञास्यते—'साधीयो योऽन्त्य' इति ॥ कश्च साधीयः ?॥ व्यव
तानां योऽन्त्यः ॥ अथ वा सापेक्षोऽयं निर्देशः क्रियते। न चान्यत्किं
पेक्ष्यमस्ति, तेन व्यवसितानेवापेक्षिष्यामहे ॥*॥ लकारस्यानुबन्धाऽज्ञापित
द्धल्ग्रहणाऽप्रसिद्धिः ॥*॥ लकारस्यानुबन्धत्वेनाऽज्ञापितत्वाद्धल्ग्रहणस्या
सिद्धिः। 'हलन्त्यमित्संज्ञं भवती'त्युच्यते, लकारस्यैव तावदित्संज्ञा
प्राप्नोति ॥*॥ सिद्धं तु लकारनिर्देशात् ॥*॥ सिद्धमेतत् ॥ कथम्!
[ 'लकारनिर्देशात्' ]। लकारनिर्देशः कर्तव्यः। हलन्त्यमित्संज्ञं भ

प्र.]व्यवसिताः परिच्छिन्ना ये समुदाया धातुत्वप्रत्ययत्वादिना धर्मेण,तेषां योऽ
इत्यर्थः। अवयवास्तु समुदायतन्त्रत्वान्नान्तरीयकोपदेशत्वाद्धातुत्वादिना न प
च्छिन्नाः। तत्र प्रकर्षगतिरिति। आदिनिवृत्त्यर्थत्वादन्त्यशब्दस्य कथं प्र
गतिः ?। उच्यते—आदेरप्युच्चारणानन्तरमवसानसम्बन्धादन्त्यत्वमनिवार्य
नास्ति तन्निवृत्तिरिति सामर्थ्यात्प्रकर्ष आश्रीयते,—व्यवसितानां योन्त्य इ
आदिमध्यानां च काल्पनिकमन्त्यत्वं, सर्वान्त्यस्य तु नित्यमेवेति तस्यैव
ग्रहणम्। अथ वेति। पूर्वं समुदायावयवसन्निधौ समुदायापेक्षमाश्रयितुं
मिति परिहृतम्। इदानीं तु समुदायार्थत्वादुपदेशस्यावयवानामसत्त्वात्त
दूरोत्सारितमिति मत्वा परिह्रियते। लकारस्येति। इतरेतराश्रयं मन्यते।
सर् ह'ल्लित्यत्र लकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः, सति च प्र
'ल'णित्यत्र लकारस्य हल्त्वात्तस्यैव शषसर् हलित्यत्रान्ते निर्दिष्टत्वादि

उ.]यवानां धातुत्वाऽभावे युक्तिमाह—अवयवा इति।समुदायतन्त्रत्वात्। समु
स्तन्त्रं प्रयोजनं येषां तत्त्वात्। भाष्ये—धातुप्रातिपदिकेति। 'अइउण्'
इत्यादौ णादीनामित्संज्ञाक्रमबोधकत्वेन, स्वरूपबोधकत्वेन च प्रातिपदिकत्व
श्रोत्रियनादेरपि तत्त्वादेव। निपातोदाहरणमाङादि। सामर्थ्यादिति। 
विनैवोपपत्तावुपक्रमाऽभावलक्षकत्वमेव दोष इति भावः। काल्पनिकमि
सर्वान्त्यस्य हि मुख्यं तत्, 'यस्मात्परो नास्तो'त्यादिलक्षणाक्रान्तत्वादिति 
अवयवानामसत्त्वादिति। तत्प्रतीतिस्तु भ्रम एव, तन्मूलक एव च समु
व्यवहार इति भावः। ननु हलामित्संज्ञाविधाने लकारे तदप्राप्तिः कथमत
इतरेतरेति। भाष्ये 'हलन्त्य'मित्युत्तरं 'लश्चे'ति वाक्यान्तरकरणात्तदर्थबो

१ 'प्रत्यन्तो'। २ 'यो व्यवसितान्त्यः'। ३ 'व्यवसितमेव'।
४ 'नुबन्धज्ञापित'। ५ क्वचिन्न।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

लकारश्चेति वक्तव्यम् ॥*॥ एकशेषनिर्देशाद्वा ॥*॥ अथ वैकशेषनिर्देशोऽयम्। 'हल्च हल्च हल्, हलन्त्यमित्संज्ञं भवती'ति॥ अथ वा लकारस्यैवेदं गुणभूतस्य ग्रहणं, तत्रोपदेशेऽजनुनासिक इदितीत्संज्ञा भविष्यति। अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति-'भवति लकारस्येत्संज्ञे'ति यदयं णलं लितं

प्र.]प्रत्याहाराश्रयेत्संज्ञा, तदाश्रयश्च प्रत्याहारः। लकारश्चेति। पूर्वं लकारस्येत्संज्ञा विधेया, तेन हलिति प्रत्याहार उपपद्यते। तत्र हल् च[3] ल् चेति समाहारद्वन्द्वं कृत्वा 'संयोगान्तस्य लोप' इति लकारो लुप्यते। हल् चेति। हस्य ल् हलित्येकः[4] षष्ठीतत्पुरुषः। द्वितीयः प्रत्याहारः। 'नपुंसकमनपुंसकेने'ति चैकशेषः। एकस्य पुंल्लिङ्गत्वादितरस्य नपुंसकत्वात्। अथ वेति। शषसर् हलित्यत्र 'हलन्त्य'मित्यत्र च लकारस्यैकादेशो लपरत्वं च क्रियते। नन्वेवमपीतरेतराश्रयमेव, लकारस्य सत्यामित्संज्ञायां हलिति प्रत्याहारः,सति च प्रत्याहारे 'ऐऔ'जिति चकारस्येत्संज्ञा, तस्यां सत्यामजिति प्रत्याहारः, 'अ'जिति प्रत्याहारे सति लकारस्येत्संज्ञा। एवन्तर्हि 'लृदिति इति ज्ञापकाल्लृकारस्येत्सञ्ज्ञाकार्यं भविष्यतीति नास्तीतरेतराश्रयत्वमिति भगवतो भाष्यकारस्याऽभिप्रायः[5]। अथ वेति[6]। णलो लकारः स्वरार्थः कृतः। असत्यां चेत्संज्ञायां कुतः स्वरः ?। श्रवणार्थस्तु

उ.]कथं तस्य बोधोऽत आह-पूर्वमिति। पाठक्रमादार्थक्रमो बलीयानिति भावः। इतरेतरयोगे द्विवचनापत्तेराह-समाहारे इति। एवं च भाष्ये 'कर्त्तव्य'पदं व्याख्येयपरमिति भावः। वस्तुतो भाष्ये कर्त्तव्यपदं यथाश्रुतमेव। कैयटस्तु चिन्त्यः। यणःप्रतिषेधारम्भेण झल्ग्रहणाऽपकर्षेण च संयोगान्तलोपाऽप्राप्तेः।वक्तॄणां सहबोधाऽसंभवेन नाज्झलावितिसूत्रोक्तवाक्याऽपरिसमाप्तिन्यायेन भाविसंज्ञया पूर्वमाचार्याणामव्यवहारेण च 'सहविवक्षाऽभावाद्द्वन्द्वाऽप्राप्तेश्चेति बोध्यम्। अत एव भाष्ये'निर्देशः कर्त्तव्य' इत्युक्तम्। निर्देश उच्चारणम्। न तु 'लुप्तनिर्दिष्ट' इत्युक्तम्। एतेन हलन्त्यं लिति प्रश्लेषः। सौत्रश्च तस्य लोप इत्यपास्तम्। सौत्रत्वाल्लोपं कृत्वा व्याख्यानमाश्रयणीयमिति गौरवेण भाष्यकृद्वक्ष्यमाणरीत्यैव प्रत्याख्यानस्य न्याय्यत्वात्।

हस्य लिति। संबन्धसामान्यषष्ठ्या समासे पर्यवसानगत्या सामीप्यलाभ इति भावः। इतरस्येति। प्रकृतेऽन्त्यपदसामानाधिकरण्यादिति भावः। वस्तुत इदं चिन्त्यम्। एवमर्थस्येष्टत्वे तत्पुरुषेऽन्त्यपदाऽसम्बन्धेन 'हलित्संज्ञं, हलन्त्यं चेत्संज्ञ'मिति वदेत्,पूर्ववत्। तस्माद्वाक्यद्वयमप्यन्त्यपदघटितम्। द्वन्द्वान्ते श्रूयमाणस्यैव प्रत्येकं संबन्धात्। तयोश्च तन्त्रेणोच्चारणं भाष्य इति हल्सूत्राऽन्त्यमन्त्यं च हलिदित्येव भाष्यार्थः। एकशेषशब्देन च भाष्ये तन्त्रं लक्ष्यते। अन्यथा सहविवक्षाऽभावादेकशेषः शास्त्रीयो न स्यादिति बोध्यम्। भाष्ये एकदेश्याह-अथ वेत्यादि।

१ इतिः क्वचिन्न। २ 'तस्य च'। ३ क्वचिन्न। ४ 'इत्येकस्तत्पुरुषः'। ५ 'स्य भावः'। ६ 'र्थन्तु'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

करोति ॥*॥ प्रातिपदिकप्रतिषेधोऽकृत्तद्धिते ॥*॥ अकृत्तद्धितान्तस्य प्राति पदिकस्य प्रतिषेधो वक्तव्यः । उदश्वित् शकृदिति॥अकृत्तद्धितान्तस्येति किम् थंम् ? ॥ कुम्भकारः नगरकारः औपगवः कापटव इति ॥*॥ इदर्थोऽमा त्सिद्धम् ॥*॥ इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति॥इदमस्तीत्कार्यं-'तित्स्व रित'मिति स्वरितत्वं यथा स्यात् ॥ नैतदस्ति प्रत्ययग्रहणं तत्र चोदयिष्यति

प्र.]णलो लकारो न भवति, हल्ङ्याबिति सूत्रे हल्ग्रहणाण्णल्व्यावृत्त्यर्थात् । तेन विभेदेति णल्व्यावृत्त्यर्थं (हल्ग्रहणं) कृतम् । लकारस्य च श्रवणेऽपृक्तत्वाऽभावा ल्लोपस्याऽप्राप्तिरिति किं हल्ग्रहणेन ? ।

प्रातिपदिकप्रतिषेध इति। यदा 'मञ्जकादिनिवृत्त्यर्थः प्रातिपदिकानामुपदेश कर्तव्य' इति पक्षस्तदायं प्रतिषेधः । अन्यथोपदेशाऽभावात्प्राप्त्यभावादनर्थकः प्रति षेधः स्यात् । कुम्भकार इति । अपवादविषयपरिहारेणेत्संज्ञायाः प्रवर्त्तनात्सूत्रे प्रातिपदिकसंज्ञेति प्रतिषेधे प्राप्ते'ऽकृत्तद्धित'इति प्रतिषेधः क्रियते । प्रत्ययग्रहण मिति । उदश्विच्छकृदिति चैतावव्युत्पन्नौ । शकृदिति शकेर्ऋतिन्निति यद्यपि कु

उ.]ज्ञापकेन ऌकारस्येत्त्वे 'उपदेश' इतिसूत्रोल्लेखोऽसङ्गत इत्यत आह–ऌकारस्ये त्संज्ञाकार्यमिति। अचपदघटितसूत्रस्य कार्यभूतेत्संज्ञेत्यर्थः। हल्ग्रहणादिति। नच ङानिवृत्त्यर्थं तत् , सुतिसीतिप्रत्ययैः प्रकृत्याक्षेपेण तद्व्यावृत्तिसिद्धिरित्यभिमानः। वस्तुतस्तद्वेदेत्यादिनिर्देशान्न श्रवणार्थो लकार इति भाष्यतात्पर्यम् । अनयोरेकदेशो क्तित्वं तु ऌकारेत्संज्ञाया अपि हल्पदार्थसिद्धेः प्रागलाभात् । 'ऌदित' इति ज्ञापक मपि शिथिलम् । सर्वेषामचामित्संज्ञाकाले तस्यापीत्त्वलाभात् । एवं णलो लित्त्व स्याऽपि ज्ञापकतोक्तिः,चादीनामित्संज्ञाप्रवृत्तिकाले णलो लस्यापि तत्प्रवृत्त्या ज्ञापक ऽसंभवात् । तस्मादेकशेषनिर्देशाद्वेत्येव समाधानम् । मञ्जकादीति । मञ्चकादि स्थाने इत्यर्थः । अयं पक्षः पस्पशाह्निकाऽन्ते भाष्ये । इदं चिन्त्यम् । यद्युपदेशो ऽज्ञातज्ञापकमुच्चारणं तर्हि 'ढकि लोप' इत्यनुमितढक उपदेशाऽभावात्कस्येत्संज्ञाऽन् पत्तिः । मञ्चकादौ मञ्जकादिभ्रमनिवृत्त्यर्थं तेषामप्यनुवादस्यैव सत्त्वेनोक्तोपदेश ऽभावाच्च।यथाकथंचिद्बोधनस्यैवोपदेशत्वे तदनुवृत्तिर्निष्फला।किं च पूर्वसूत्रे उपदेश शब्दस्य करणसाधनत्वपक्षेऽपठितानामप्येषामुपदेशत्वमस्त्येव । 'व्यवसिताऽन्त्यं ह'लिति न्यासं कुर्वता वार्त्तिककृता तदनुवृत्तेस्त्यक्तत्वाच्च । ननूपदेश एव णकार लोपे पश्चात्प्रातिपदिकत्वमिति कथमत्र निषेधप्रसक्तिरत आह—अपवादेति । ननु शकृति कृतः प्रत्ययत्वात्तद्ग्रहणेऽपि दोषोऽत आह–उदश्विदिति । उदकेन श्वय

१ 'देवेत्सञ्ज्ञा'। २ 'न लग्रहणं कृतम्' । न लकारो भवति । 'न लकारः । हल्ड्या' । ३ 'तत्र हि'। ४ कचिन्न । ५ 'लकारस्य श्रव' ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

इदं[1] तर्हि राजा तक्षा, ञ्नितीत्याद्युदात्तत्वं यथा स्यात् ॥ ञ्नितीत्युच्यते, तत्र व्यपवर्गाऽभावान्न भविष्यति ॥ इदं तर्हि 'स्वर्'। 'उपोत्तमं रिती'त्येष स्वरो यथा स्यात् । स्वरितकरणसामर्थ्यान्न भविष्यति 'न्यङ्स्वरौ स्वरिता'विति ॥ इह[3] तर्हि-'अन्तर्' ॥ उत्तमशब्दस्त्रिप्रभृतिषु वर्तते, न चात्र त्रिप्रभृतयः सन्ति ॥ इह[2] तर्हि 'सनुतर्'। 'उपोत्तमं रिती'त्येष स्वरो यथा स्यात्॥ अन्तोदात्तनिपातनं करिष्यते स निपातनस्वरो रित्स्वरस्य बाधको भविष्यति ॥ एतच्चात्र युक्तम्-यदित्कार्याऽभावादित्संज्ञा न स्यात् ,यत्रेत्कार्यं भवति भवति तत्रेत्संज्ञा । तद्यथा 'ऽऽगस्त्यकौण्डिन्ययोरगस्तिकुण्डिन'जिति॥ [हलन्त्यम्]॥

प्र.]त्पाद्यते तथाप्युपदेशे तकारोऽन्त्यो न भवतीतीत्संज्ञा न प्रवर्तते।राजा तक्षेति। नन्वव्युपत्तिपक्षेऽप्यनयोरवश्यमाद्युदात्तत्वमेष्टव्यम् । तत्राद्युदात्तस्याद्युदात्तत्वे किं प्रयोजनं येनेत्संज्ञा स्यात् ?।उच्यते-आमन्त्रितनिघातप्रतिषेधार्थमाद्युदात्तत्वं स्यात् । 'न ङिसंबुद्ध्यो'रिति नलोपस्य प्रतिषेधो, नेत्संज्ञाया इति तत्प्रतिबद्धः स्वरः स्यात्।

व्यपवर्गाऽभावादिति। नित्परो नास्तीति भावः।यदा तु 'सौवर्यः सप्तम्यस्तदन्तसप्तम्य' इति पक्षस्तदाऽपि निदेवायं, न तु निदन्त इति नास्ति स्वरः । अत्र तु पक्षे 'श्रोत्रिय'न्निति यदा वाक्यार्थे पदवचनं तदा स्वरो न सिध्यति । यदा तु छन्दसः श्रोत्रभावो घंश्च प्रत्ययस्तदा निदन्तत्वात्स्वरसिद्धिः । तद्यथागस्त्येति । प्रत्ययस्य लुकि कृते परिशिष्टस्य कुण्डिनजादेशः । तत्र प्रत्ययलक्षणेन तद्धिता-

उ.]इति व्युत्पत्तावप्यस्य तकारस्य तुका निष्पन्नत्वात्प्रत्ययावयवत्वाऽभावात्तत्राऽव्युत्पन्नत्वकथनफलं चिन्त्यम्। उपदेशे तकारोऽन्त्यो न भवतीति।इदमुक्तरीत्या चिन्त्यम् । भाष्यस्वरसस्त्वव्युत्पन्नत्व एवेति बोध्यम् । किं चोपदेश इत्यनुवृत्तौ 'प्रातिपदिकप्रतिषेध' इति वार्त्तिकानुत्थानमेव, 'उद्देशश्च प्रातिपदिकानां नोपदेश' इत्यादेच इत्यादिसूत्रभाष्योक्तेः । अत एव पस्पशाह्निकान्ते 'उपदेश' इत्यस्याऽनुवाद इत्येवाऽर्थ एतद्भाष्यैकवाक्यत्वादिति बोध्यम्।ननु संबुद्धौ 'न ङिसंबुद्ध्यो'रिति लोपनिषेधसामर्थ्यादित्त्वप्रयुक्तनलोपस्याऽप्यभावेन संज्ञाऽपि नेति मन्दाशङ्कायामाह-न ङीति । नित्परो नेति । समुदायाऽर्थत्वादुपदेशस्य स एव निद्व्यपदेशयोग्य इत्यनिति अवयवो नित्परोऽस्तीति न शङ्क्यम्।न तु निदन्त इति। व्यपदेशिवद्भावस्त्वप्रातिपदिकेनेति निषिद्ध इत्यभिमानः । अत्र त्विति । तथा चेदं भाष्यमेकदेश्युक्तिः, 'व्यपदेशिवद्भावोऽप्रातिपदिकेने'ति निषेधस्तु प्रत्ययविधिविषय इति भावः । प्रत्ययस्येति । प्रतिषेधारम्भेऽस्य चस्येत्वं न स्यादिति तन्न कार्यमिति भावः । अत्र हि चित्त्वेनाऽन्तोदात्तत्वमिष्यते, प्रकृतिप्रत्ययान्यतरचित्त्वमा

१ 'इह तर्हि' । २ 'इदं तर्हि' । ३ 'कार्यं भविष्यति तत्रे' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

## न विभक्तौ तुस्माः ॥ १।३।४ ॥

॥*॥विभक्तौ तवर्गप्रतिषेधोऽतद्धिते ॥*॥ विभक्तौ तवर्गप्रतिषेधोऽतद्धि इति वक्तव्यम् । इह मा भूत्–'किमोऽत्' 'क्व प्रेप्सन्दीव्यसे' 'क्वार्द्रमाप इति ॥ स तर्हि प्रतिषेधो वक्तव्यः?॥ न वक्तव्यः । आचार्यप्रवृत्तिर्ज्ञापयति 'न विभक्तौ तद्धिते प्रतिषेधो भवती'ति, यदयमिदमस्थमुरिति मकारस्ये त्संज्ञापरित्राणार्थमुकारमनुबन्धं करोति ॥ यद्येतज्ज्ञाप्यते 'इदानी'मित्यत्रा प्राप्नोति॥ इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं–'मिदचो ऽन्त्यात्पर' इति।अचामन्त्यात्परो यथा स्यात्॥इश्भावे कृते नास्ति विशेषो 'मि चोऽन्त्यात्परः' इति वा परत्वे,'प्रत्ययः पर' इति वा॥ स एव तावदिश्भावं न प्राप्नोति ॥ किं कारणम् ?॥ 'प्राग्दिशः प्रत्यये'ष्वित्युच्यते ॥ कः पुनर्ह तीश्भावं प्राग्दिशः प्रत्ययेषु वक्तुम् ॥ किं तर्हि ? ॥ प्राग्दिशोऽर्थेष्विश्भाव

प्र.]न्तत्वात्प्रातिपदिकत्वादित्संज्ञानिषेधः स्यात् । न चाऽयं चकारस्तद्धितसंबन्ध यतो'ऽकृत्तद्धित' इति निषेधः स्यात् । [इलन्त्यम् ] ॥

न विभक्तौ तुस्माः । इत्संज्ञापरित्राणार्थमिति । इत्संज्ञायाः परित्राणमि 'साधनं कृते'ति पञ्चमीतत्पुरुषः।शेषविवक्षायां वा षष्ठीसमासः।अनेनोकारेणानुसं 'येषां'प्राग्दिशो विभक्ति'रिति विभक्तिसंज्ञा तेषां'न विभक्ता'वितीत्संज्ञा न निषिध्य इति। अत्रेति। इदानीमित्यत्र । अर्थेष्विति। यथेष्टमवधिमत्कल्पनेत्यत्रार्थोवधिमत्त्वे नाश्रीयते । तत्राऽनुत्पन्न एव प्रत्यय इश्भावः । ततः प्रत्ययः। यदि तु पूर्वं प्रत्य स्यात्तदा मित्त्वादचोऽन्त्यात्परे दानीमि कृते तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्स्व

उ.]दायैव चिदवयवकप्रकृतिप्रत्ययसमुदायस्याऽन्तोदात्ततायास्तेन विधानात् ।

न विभ । नन्वित्संज्ञाव्यावर्त्तकोकारस्य कथं तत्परित्राणार्थत्वमत आह– इत्संज्ञाया इति। 'इटो'दित्यादीनां मुखसुखार्थत्वप्रतिज्ञया श्रवणाऽभावस्य बोधि त्वात्तत्प्रतिज्ञयैव तेषु 'न विभक्ता'वित्यस्याऽप्रवृत्तिरिति नाऽतद्धित इत्यसङ्गतम् इदानीमत्र प्राप्नोतीति भाष्ये । ज्ञापनकाले इत्यर्थः । अत्रत्यमत्रेति व्याचष्टे इदानीमित्यत्रेति । भाष्ये–तावदिश्भाव इति । प्रत्ययोत्पत्तेः पूर्वं न प्राप्नोति त्यर्थः । ननु 'प्राग्दिश' इति शब्दस्याऽवधित्वेनोपादानादवधिमानपि शब्द एवे त्याशङ्क्याह–यथेष्टमिति । तस्याऽपि प्रकृतित्वेन सजातीयाऽवधिमदसम्भव इ भावः । अर्थ इति । तत्तत्प्रकृत्यर्थरूपोऽर्थः। ननु प्रत्ययादेशयोर्मध्ये कदाचित्प्र प्रत्ययोत्पत्तावित्कार्यं स्यादित्याशङ्क्य प्रथममादेशोत्पत्तौ विनिगमकमाह– त्विति । भाष्ये 'किं तर्हि ? प्राग्दिशोऽर्थेष्विश्भाव' इत्युक्ते 'एवमपि परत्वात्प्र

१ 'प्रेप्सं दीप्यसे' । २ अपिः क्वचिन्न । ३ 'त्यर्थो' । 'ह्यत्रार्थो' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किंसर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्तिः॥ एवं तर्हि तदोऽप्ययं वक्तव्यः। ततश्च मिदचोन्त्यात्परत्वेन न सिध्यति ॥ ननु चाऽत्राप्यत्वे कृते नास्ति विशेषो 'मिदचोऽन्त्यात्परः' इति वा परत्वे, 'प्रत्ययः पर' इति वा ॥ तद्यत्वं न प्राप्नोति ॥ किं कारणम् ? ॥ विभक्तावित्युच्यते ॥ एवं तर्हि यकारान्तो दानीं करिष्यते ॥ किं यकारो न श्रूयते ? ॥ लुप्तनिर्दिष्टो यकारः ॥

चुटू ॥ १।३।७ ॥

॥*॥ चुंञ्चुप्चणपोश्चकारप्रतिषेधः ॥*॥ चुंञ्चुप्चणपोश्चकारस्य प्रतिषेधो

प्र.]देश इशि सति'दानीं'विधानमनर्थकमेव स्यात्। तदोप्ययमिति।'तदो दा च'ति चकारेणाऽनुकर्षणात् । ननु चेति । सप्तम्यां विभक्तावुत्पन्नायामत्वे कृते दानीमिति भावः। तद्धीति । 'प्राग्दिशोऽर्थेष्वि'ति पूर्वमभिधानात्सप्तम्यर्थवृत्तेः कालवाचिनो मित्त्वान्मध्ये दानीमा भाव्यमिति तदानीमित्यस्याऽसिद्धिरेवेत्यर्थः। यकारान्त इति । यकारोऽन्त्यत्वमनुभवन्मकारस्याऽन्त्यत्वं प्रतिबध्नाति । यकारस्य च 'संयोगान्तस्य [लोप' इति] लोपः क्रियते । यद्येवं मकार एवोपदेशेऽन्त्यः श्रूयते इति प्राप्नोत्येव मकारस्येत्संज्ञा । नैतदस्ति 'पूर्वत्रासिद्ध'मिति मकारस्येत्संज्ञायां यलोपस्याऽसिद्धत्वादन्त्यत्वाऽभावात् [ न विभक्तौ ] ॥

उ.]एव पूर्वमुचित' इत्याशङ्क्योक्तं 'किंसर्वनामबहुभ्योऽद्व्यादिभ्यः प्रत्ययोत्पत्ति'रिति। एवं च द्व्यादिभेदज्ञानसापेक्षत्वेन बहिरङ्गप्रत्ययात्पूर्वमन्तरङ्गत्वादादेश एव । अत्रैवाऽर्थे 'दानीं'ग्रहणमपि ज्ञापकमिति तद्भावं केचित् । वस्तुतोऽयमपाठः । 'इदमो र्हि'लित्यत 'इदम' इत्यनुवर्त्तमाने दानीमो विधानात्। कैयटस्वरसोऽप्येवमेव। अत्वप्रवृत्तिप्राथम्ये विनिगमकमाह–सप्तम्यामिति । 'अन्तरङ्गानपी'तिन्यायमसौ न जानीते इति बोध्यम्। सप्तम्यर्थेति । 'प्राग्दिश' इतिवत्सप्तम्या इत्यप्यर्थपरमेव । प्रातिपदिकाच्च तद्धितोत्पत्तिरिति भावः। अन्तरङ्गानपीति न्यायाच्च। ननु यकारसत्त्वेऽपि दानीमित्यस्य मोऽन्त्य एवेत्यत आह–यकार इति । संयोगान्तस्य लोप इति । चिन्त्यमिदं, यणः प्रतिषेधात् । तस्माच्चशब्दनिमित्तको 'लोपो व्यो'रिति लोप इति वक्तुमुचितम्। उपदेशेऽन्त्य इति।व्यवसितस्याऽन्त्यः श्रूयत इति वक्तुमुचितम्। पूर्वत्रेति । वस्तुतस्तु 'लोपो व्यो'रित्यस्य बहिरङ्गतयाऽसिद्धत्वमित्संज्ञां प्रतीति बोध्यम्। न च यकारे कृतेऽपि मान्तस्य प्रत्ययतया व्यवसिताऽन्त्यत्वेन दुर्वारैवेत्संज्ञेति वाच्यम्। व्यवसितान्त्यशब्देन प्रत्यासत्त्या शास्त्रकृद्व्यवसितान्त्यस्यैव ग्रहणेनाऽदोषात्। तद्व्यवसितश्च यान्त इति बोध्यम्। उत्तरसूत्रस्थस्य 'यकारादी चुञ्चुप्चणपा'विति भाष्यस्य योजनार्थं मदुक्तप्रकार आवश्यक इति बोध्यम्। [ न विभक्तौ ] ॥

१ 'क्वित्तर्होत्वं न' । २ 'चञ्चुप्' । ३ क्वचिन्न । ४ 'ध्येयं' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

वक्तव्यः । केशचुञ्चुः । केशचणः ॥*॥ इदर्थाऽभावात्सिद्धम् ॥*॥ इत्कार्याऽभावादत्रेत्संज्ञा न भविष्यति ॥ इदमस्तीत्कार्यं 'चितोऽन्त उदात्तो भवती'त्यन्तोदात्तत्वं यथा स्यात् ॥[*॥ पित्करणं किमर्थम् ॥*]॥ पित्करणमिदानीं किमर्थं स्यात् ? ॥*॥ पित्करणं किमर्थमिति चेत्पर्यायार्थम् ॥*॥ पित्करणं किमर्थमिति चेत्पर्यायार्थमेतत्स्यात्॥एवं तर्हि ॥*॥यकारादी चुञ्चुप्चणपौ॥*॥ किं यकारो न श्रूयते ? ॥ लुप्तनिर्दिष्टो यकारः ॥*॥ इर उपसङ्ख्यानम् ॥*॥ इर उपसङ्ख्यानं कर्तव्यम् । रुधिर्—अरुधत् । अरौत्सीत् ॥*॥ अवयवग्रहणात्सिद्धम्॥*॥ [अवयवग्रहणात्सिद्धम् ] । रेफस्याऽत्र 'हलन्त्य'मितीत्सञ्ज्ञा भविष्यति,इकारस्य 'उपदेशेऽजनुनासिक' इति॥*॥अवयवग्रहणादिति चेदिदिद्विधिप्रसङ्गः॥*॥अवयवग्रहणादिति चेदिदिद्विधिरपि प्राप्नोति । भेत्ता छेत्ता । 'इदितो नुम्धातो'रिति नुम्प्राप्नोति ॥ यदि पुनरयमिदिद्विधिः कुम्भीधान्यन्यायेन विज्ञायेत । तद्यथा–'कुम्भीधान्यः श्रोत्रियं' इत्युच्यते। यस्य कुम्भ्या-

प्र.] चुट्ट । लुप्तनिर्दिष्ट इति । पूर्वं निर्दिष्टः पश्चाल्लुप्त इत्यर्थः । राजदन्तादेराकृतिगणत्वाद्भाष्यकारवचनाद्वा पूर्वकालस्य परनिपातः । अथ वा लुप्तोऽयमिति प्रतिज्ञातो लुप्तनिर्दिष्टः । इर उपसङ्ख्यानमिति । 'इरितो वे'त्यत्रेरिति समुदायानुकरणम् । इर इत्यस्य सोऽयमिरित् । समुदायस्य चाऽज्झलात्मकत्वादप्राप्तेत्सञ्ज्ञोपसङ्ख्यायते । समुदायस्य चेत्संज्ञासंवन्धेऽवयवाः पारतन्त्र्यादित्संज्ञां न लभन्त इतीदित्वाऽभावान्नुमभावः । नन्वेवं सति स्वरितेत इत्यात्मनेपदं न प्राप्नोति । नैष दोषः । स्वरितत्वप्रतिज्ञानसामर्थ्यादवयवगतं स्वरितत्वं समुदाय आरोपयिष्यते । अवयवग्रहणादिति । इरावितौ यस्य स इरिदित्येवमित्संज्ञकत्वेनाऽवयवावेवाश्रीयेते, न तु समुदाय इत्यर्थः ।

यदि पुनरिति । यस्य च कुम्भीस्थादन्यन्निहितं धान्यं नास्ति स कुम्भीधान्यः।यद्यपि नुम्विधावस्य न्यायस्य निमित्तं नास्ति तथापि दोषेणैव तन्न्यायानाश्र-

उ.]चुट्ट । लुप्तस्य निर्देशाऽयोगादाह–पूर्वमिति। इति प्रतिज्ञात इति । निर्दिष्टशब्दः प्रतिज्ञातार्थको, मध्यमपदलोपी च समास इति भावः । नन्विरित इत्यादाविरावितौ यस्येति विग्रहाद्धलन्त्यमुपदेशेऽजित्येव सिद्धे इदं व्यर्थमत आह–इरित इति । इरावितावि‍ति । लक्ष्याऽनुरोधाद्द्विवचनान्तेनाऽपि विग्रह इति भावः । एवं चाऽऽत्मनेपदार्थं सामर्थ्यं नाश्रयणीयमिति वोध्यम् । यद्यपीति । दानपात्रतासिद्धये विशेषणकुम्भ्यामन्वितैवकारगर्भसमासेनान्ययोगव्यवच्छेदलाभेपि प्रकृते तदाश्रयणे प्रमाणाऽभावादिति भावः । भाष्ये–इकार एवेदिति । तत्पुरुषत्वमेवाऽस्य, न

१ क्वचिन्न । २ लुप्तं स्यात् । ३भाष्यमित्यन्ये । 'चञ्चु'। ४ लुप्तं स्यात् । ५'चेदिद्विधि' ।६ 'विज्ञायेत'। ७ 'श्रोत्रियपुत्र इत्यु' । ८ 'स्यैवेत्सञ्ज्ञा'। ९ 'विशेषेण' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मेव धान्यं स कुम्भीधान्यः। यस्य पुनः कुम्भ्यां चाऽन्यत्र च धान्यं, नाऽसौ कुम्भीधान्यः॥ नायमिदिद्विधिः कुम्भीधान्यन्यायेन शक्यो विज्ञातुम्। इह हि दोषः स्यात्–'टुनदि'–नन्दथुरिति॥ एवं तर्हि नैवं विज्ञायते–इकार इदस्य सोऽयमिदित्तस्येदित इति॥ कथं तर्हि ?॥ इकार–एवेत् इदित् ,इदिदन्तस्येति॥ अथ वा ऋकारस्यैवेदमित्त्वभूतस्य ग्रहणम्। तत्रोपदेशेऽजनुनासिक' इतीत्संज्ञा भविष्यति॥ अथ वाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'नैवंजातीयकानामिदिद्विधिर्भवती'ति यदयमिरितः कांश्चिन्नुमनुपक्तान्पठति–'उब्नुन्दिर्निशासने' 'स्कन्दिर्गतिशोषणयोः'। अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति–'इर्शब्दस्येत्संज्ञा भवती'ति यदय'मिरितो वे'त्याह॥

प्र.]यणमाह–नायमिति। इकार एवेदिति। इदिता धातुर्विशेष्यत इति तदन्तविधिः। ऋकारस्येति। 'ऋत इद्धातो'रितीत्त्वे रपरत्वे च भिदिरित्यादिनिर्देशः। अनङ्गस्याऽपि निपातनादित्त्वम्। तत्र च भिदृशब्दे पूर्वमृकारस्येत्संज्ञा। तत इत्त्वरपरत्वे। 'इरितो वे'त्यत्राऽपि ऋ इदस्येति समासे कृते निपातनादित्त्वरपरत्वयोः कृतयोरिरित इति निर्देशः। नुमनुपक्तानिति। नुमा नकारो लक्ष्यते, नकारयुक्तानित्यर्थः। न च लोपाऽभावार्थो नकारोपदेश इति वक्तुं शक्यम्। अनकारोपदेशेऽपीदित्त्वान्नलोपस्याऽप्रसङ्गात्। तस्मान्नकारोपदेशेनेरितामिदित्कार्याऽभावो ज्ञाप्यते। 'न दृश' इति क्सादेशनिषेधेनाऽपीरितामिदित्कार्याऽभावो ज्ञायते। अन्यथा दृशेरिदित्त्वान्नुमि सति इगुपधत्वाऽभावात्प्राप्तिरेव क्सस्य नास्तीति किं तन्निषेधेन। अन्त इति। 'गोः पादान्ते' इत्यतः। तेनाऽन्तेदितां

उ.]बहुव्रीहित्वमित्येतत्सूचनार्थैवकारः।अङ्गाधिकारस्थत्वेन प्रत्ययनिमित्तत्वात्तदप्राप्तेराह–अनङ्गस्यापीति। 'अधातो'रित्यपि बोध्यम्।'न धात्वि'तिसूत्रस्थभाष्यकैयटरीत्याऽनुबन्धविनिर्मुक्तस्यैव धातुत्वात्। अत एव भाष्ये सूत्रं नोपन्यस्तम्। इत्संज्ञायाः परत्वादित्त्वे इष्टसिद्धिर्न स्यादत आह–तत्रेति। निर्देशानुपपत्तिकल्पितमित्त्वं बहिरङ्गमिति भावः। निपातनादेवेत्त्वरपरत्वाभ्यां पूर्वं 'तस्य लोप' इत्यपि नेति बोध्यम्। नुमोऽभावादाह—नुमेति। एतद्भाष्यात्केषां चिद्धातूनामर्थनिर्देशसहितोऽपि पाठ इति ज्ञायते। किं तन्निषेधेनेति। यद्यपि तेनोपदेश इगुपधत्वं विवक्ष्यते इत्यपि ज्ञापनं संभवति, तथापि लक्ष्याऽनुरोधादिदमेव ज्ञाप्यते इत्यभिमानः।

गोः पादान्त इति। समानयोगनिर्दिष्टानामेकदेशोपि स्वरितत्वप्रतिज्ञासामर्थ्यादनुवर्तत इति भावः। अन्तपदार्थस्येकारविशेषणत्वेपि सौत्रत्वात्समास इति बोध्यम्। अत्र पृथगित्संज्ञा, 'इदित' इति कर्मधारयात्षष्ठीति युक्तः पक्षः। [चूड़ू]॥

१ 'मित्त्वम्'। २ 'तस्य लोप'। ३ 'मिदितः'। ४ 'पठन्ति'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ वाऽन्त इति वर्तते ॥ [ चुट्ट ] ॥

तस्य लोपः ॥ १।३।९ ॥

तस्यग्रहणं किमर्थम् ? ॥ इत्संज्ञकः प्रतिनिर्दिश्यते ॥ नैतदस्ति प्रयोजनम् । प्रकृतमिदिति वर्तते॥ क्व प्रकृतम् ?॥ 'उपदेशेऽजनुनासिक'इ'दिति॥ तद्वै प्रथमानिर्दिष्टं षष्ठीनिर्दिष्टेन चेहार्थः ॥ अर्थाद्विभक्तिविपरिणामो भविष्यति । तद्यथा–'उच्चानि देवदत्तस्य गृहाणि, आमन्त्रयस्वैनेम्'। 'देवदत्त'मिति गम्यते ॥ 'देवदत्तस्य गावोऽश्वा हिरण्यं च, आढ्यो वैधेयेयः'। देवदत्त इति गम्यते । पुरस्तात्पष्ठीनिर्दिष्टं सदर्थाद्वितीयानिर्दिष्टं, प्रथमानिर्दिष्टं च भवति, एवमिहापि पुरस्तात्प्रथमानिर्दिष्टं सदर्थात्षष्ठीनिर्दिष्टं भविष्यति ॥ इदं तर्हि प्रयोजनं–येऽनेकाल इत्संज्ञास्तेषां लोपः सर्वादेशो यथा स्यात् ॥ अथ क्रियमाणेपि वै[3] तस्यग्रहणे कथमिव लोपः सर्वादेशो लभ्यः ?॥ लभ्य इत्याह ॥ कुतः ? ॥ 'वचनप्रामाण्यात्' । तस्यग्रहणसामर्थ्यात् ॥*॥ इतो लोपे णल्क्त्वानिष्ठासूपसङ्ख्यानमित्प्रतिषेधात् ॥*॥ इतो लोपे णल्क्त्वानिष्ठासूपसङ्ख्यानं कर्तव्यम् । णल्–अहं पपच । क्त्वा–देवित्वा सेवित्वा ॥ निष्ठा–शयितः शयितवान् ॥ किं पुनः कारणं न सिध्यति ?॥ इत्प्रतिषेधात्'॥ प्रतिषिध्यतेऽत्रेत्संज्ञा । णलुत्तमो णिद्वा भवति । क्त्वा सेण्न किद्भवति । निष्ठा[3] सेण्न

प्र.] धातूनां नुमागमो, न तु मध्येदिताम् ॥ [ चूड्ड ] ॥

तस्य लोपः । तस्यग्रहणमिति । अभावो लोपः, स च भावोपाधिरेव प्रतीयते नाऽन्यथेति प्रकरणादित्संज्ञस्यैव लोपो भविष्यतीति प्रश्नः । विभक्तिविपरिणाम इति । सादृश्यात्तत्त्वाऽध्यवसायाद्विपरिणामव्यवहारः । वाक्यान्तरे तु योग्यविभक्त्यन्तं परमार्थतः शब्दान्तरमेव संनिधीयते । तस्यग्रहणसामर्थ्यादिति । अलोन्त्यस्येत्यन्त्यस्य लोपे प्रसक्ते तस्यग्रहणेन समुदायस्य लोपः प्रति·

उ.] तस्य लोपः।अभावो लोप इति । दर्शनाऽभावो लोप इत्यर्थः। भावोपाधिरिति । दर्शनस्य सविषयत्वाच्छब्दशास्त्रत्वाच्छब्दरूप एव स विषयः। किं च भावविरोधीत्यभावपदस्याऽर्थः । एवं च भावोपाधिरेव स भावप्रतियोगिक एव स इति भावः । ननु प्रकृतस्यान्वययोग्यत्वेऽनुषङ्गः, अयोग्यत्वेऽध्याहार एवेति विपरिणामोऽसङ्गतोऽत आह—सादृश्यादिति । एवं चैकदेशसारूप्येण विपरिणामव्यवहार इति भावः । भाष्ये 'आमन्त्रयस्वे'त्येतदन्तमेव लौकिकं वाक्यम् । तत्र प्रकृतत्वादेनमिति गम्यत इत्यर्थः । तद्याचष्टे–देवदत्तमिति गम्यत इति । 'एन'मित्यस्य सामान्यशब्दत्वाद्विशेषलाभायेदमुक्तम् । वैधेयो–मूर्खः । अलोन्त्यस्येति।

१ केचिदिदं नेच्छन्ति । २ 'वैधेयः' । ३ क्वचिन्न । 'माणेऽपि च' । ४ 'तत्रे'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

किद्भवतीति ॥*॥ सिद्धं तु णलादीनां ग्रहणप्रतिषेधात् ॥*॥ सिद्धमेतत् ॥ कथम् ? ॥ ['णलादीनां ग्रहणप्रतिषेधात्'] । णलादीनां ग्रहणानि प्रतिषिध्यन्ते । णलुत्तमो वा [नै] णिद्ग्रहणेन गृह्यते । क्त्वा सेण्न किद्ग्रहणेन गृह्यते । निष्ठा सेण्न किद्ग्रहणेन गृह्यत इति ॥*॥ निर्दिष्टलोपाद्वा ॥*॥ निर्दिष्टलोपाद्वा सिद्धमेतत्। अथ वा निर्दिष्टस्याऽयं लोपः क्रियते तस्मात्सिद्धमेतत् ॥*॥ तत्र तुस्मानां प्रतिषेधः ॥*॥ तत्र तुस्मानां प्रतिषेधो वक्तव्यः । तस्मात् । तस्मिन् । यस्मात् । यस्मिन् । वृक्षाः । प्लक्षाः । अचिनवम् । असुनवम् । अकरवम् ॥*॥ न वोच्चारणसामर्थ्यात् ॥*॥ न वा वक्तव्यः ॥ किं कारणम् ? ॥ ['उच्चारणसामर्थ्यात्'] ॥ उच्चारणसामर्थ्यादत्र लोपो न भविष्यति ॥*॥ अनुबन्धलोपे भावाऽभावयोर्विप्रतिषेधादप्रसिद्धिः ॥*॥ अनुबन्धलोपे भावाऽभावयोर्विरोधादप्रसिद्धिः । न ज्ञायते केनाऽभिप्रायेण प्रसंजति, केन निवृत्तिं करोतीति ?॥*॥ सिद्धं त्वपवादन्यायेन ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ 'अपवादन्यायेन'॥ किं पुनरिह तथा यथोत्सर्गापवादौ ?॥ ॥*॥ भावो हि कार्यार्थोऽनन्यार्थो लोपः ॥*॥ 'कार्यं करिष्यामी'त्यनुबन्ध आसज्यते, 'कार्यादन्यन्मा भू'दिति लोपः ॥

---

प्र.]पाद्यते । ग्रहणप्रतिषेधादिति । नैतेषामित्संज्ञा प्रतिषिध्यतेऽपि तु तत्प्रतिबद्धं कार्यमित्यर्थः। निर्दिष्टलोपाद्वेति । 'तस्ये'त्यनेनेत्संज्ञाप्रकरणे निर्दिष्टस्य परामर्शादसत्यामपीत्संज्ञायां लोपो भवतीत्यर्थः । तुस्मानामिति । यद्यसत्यामपीत्संज्ञायां लोपो भवति तदा तुस्मानामपि प्राप्नोति । ते हि 'हलन्त्य'मित्यत्र निर्दिष्टाः ।
नवेति । इत्संज्ञायाः प्रतिषेधादेषामित्कार्यं नास्ति। यदि चाऽनेन लोपः स्यादुपदेशस्तेषामनर्थकः स्यात्। अनुबन्धलोप इति। यथा कश्चिद्वक्ति घटोस्तीति, पुनश्च

---

उ.]'नानर्थक' इति परिभाषा त्वलोन्त्यात्सूत्रे प्रत्यख्यातैवेति भावः । तस्यग्रहणेनेत्संज्ञकपरामर्शिनाऽश्रुतत्वाद्ग्रहणं कथं प्रतिषिध्यते आह—नैषामिति । णिदादिपदलक्षिततत्कार्याणां प्रतिषेध इति भावः । भाष्ये 'ग्रहणानी'त्यस्य—णिदादिपदग्रहणप्रयुक्तानि कार्याणीत्यर्थः। अग्रेपि 'णिद्ग्रहणेन गृह्यते—यत्कार्यं तत्कार्यं लभत इत्यादिक्रमेणाऽर्थः। भाष्ये—ग्रहणविकल्पेपि प्रतिषेधोस्तीति 'प्रतिषिध्यन्त' इत्युक्तम्। निर्दिष्टेति । उच्चारितशब्दप्रतिपादितत्वमेवाऽत्र निर्दिष्टत्वं विवक्षितम् । अत एव णादीनां निर्दिष्टत्वमिति भावः । अयं पक्ष एकदेशिनः, सर्वलोपसिद्धेः । इत्संज्ञाद्वारा तत्कार्यार्थमुच्चारणमस्त्वित्यत आह—इत्संज्ञाया इति । नन्वनुबन्धाः श्रूयन्त-

---

१ लुप्तं स्यात् । २ क्वचिन्न । ३ 'वा णिद्ग्रहणेन न गृह्यते' । ४ क्वचिदिदं व्याख्यानं नास्ति । ५ 'नैषाम्'। ६ संज्ञाप्रति' । ७ 'यत्कार्याणां प्रतिषेध इति भावः' । ८'प्रतिषिध्यन्ते' ।

CC-0. Vasishtha Tripathi Collection. Digitized by eGangotri

अथ यस्यानुबन्ध आसज्यते किं स तस्यैकान्तो भवत्याहोस्विदनेकान्तः॥
॥*॥ एकान्तस्तत्रोपलब्धेः ॥*॥ 'एकान्त' इत्याह ॥ कुतः ? ॥ 'तत्रोप-
लब्धेः' ॥ तत्रस्थो ह्यसावुपलभ्यते । तद्यथा—वृक्षस्था शाखा वृक्षैकान्तोप-
लभ्यते ॥*॥ तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्त-
त्वात् ॥*॥ तत्राऽसरूपविधौ दोषो भवति—'कर्मण्यण्' 'आतोऽनुप-
सर्गे कः' इति । क्वचिपयेऽणपि प्राप्नोति ॥ सर्वादेशे च दोषो भवति।

प्र.]चक्ति नास्तीति तथाऽनुबन्धानामुच्चारणाद्भावानुज्ञानं, लोपविधानाच्चाऽभावानुज्ञेति
विरोधादप्रामाण्यप्रसङ्गः । सिद्धमिति । यथाऽणं को बाधते तथा कार्ये चरि-
तार्थमुच्चारणात्प्राप्तं भावं लोपोऽनन्यार्थो बाधते । एकान्त इति । एकदेशः।
अवयव इत्यर्थः । अनेकान्तस्तूपलक्षणमेव केवलम् । यथा गृहस्य काकः । तत्रो-
पलभ्यमानस्य रूपद्वयदर्शनाद्वृक्षे शाखावलाकयोरिवेति प्रश्नः ।

एकान्तस्तत्रोपलब्धेरिति। ननु यदेव संशयनिमित्तं स एव कथं निश्चयहेतुः।
उच्यते—सामर्थ्यादवधारणमाश्रीयते 'तत्रैवोपलब्धे'रिति । अवयवस्तत्रैवोपल-
भ्यते, अनवयवस्तु तत्र चाऽन्यत्र च । ननु वकारस्य व्रतत्रणवृक्षादिषु बहुशः
पलब्धिः, न चाऽसावनवयवः । नैष दोषः । भिन्नसमुदायविषयं वर्णान्तरमेव
तदिति शकुनिभाष्ये प्रतिपादितम् । तत्राऽसरूपेति । 'अनाकारान्तत्वा'दित्येत-
द्दाप्प्रतिषेध इत्यनेनैव सामर्थ्यात्सम्बध्यते । क्वचिपय इति । एकान्तत्वे वैरूप्या-
त्समावेशप्रसङ्गः । अनेकान्तत्वे तूभावप्यकाराविति सारूप्यादसमावेशः । अने-

उ.]इति वचनाऽभावात्कथं विरोधोऽत आह—यथेति।अनुमितेन विरोध इति भावः
सामान्यविशेषभावाऽभावात्कथमपवादन्यायोऽत आह—यथाऽणमिति । विषया-
न्तरे चरितार्थमित्यर्थः । कार्ये—इत्वप्रयुक्ते । भाष्ये—कार्यादन्यत्—श्रवणम्।
सन्देहबीजं दर्शयति—तत्रोपलभ्यमानस्येति ।

शकुनिभाष्ये इति । 'यदि पुनरिमे वर्णाः शकुनिवत्स्युरान्यभावं तु
कालशब्दव्यवाया'दित्यत्रेत्यर्थः । एक एव ककार इति पक्षेपि न दोषः । लोप-
शास्त्रज्ञानात्पूर्वं यस्तत्रोपलभ्यते एव सोऽवयव इत्यर्थात् । अन्यथा शाखा
अपि छेदनोत्तरमन्यत्रोपलम्भात्तत्रैवोपलम्भाऽभावेनाऽनवयवत्वं स्यात् । एवं
चाऽनुपलम्भकयत्नं विनाऽपि तत्राऽन्यत्र चोपलभ्यमानोऽनवयवः, तं विना तत्रो-
पलभ्यमान एव यः सोऽवयव इति भाष्याशय इत्यन्ये । भाष्ये—तत्रेत्यस्य
एकान्तपक्षे इत्यर्थः । अनाकारान्तत्वादित्येतदिति । 'असरूपसर्वादेश'तिपदे
लुप्तसप्तमीके दोषपदाध्याहारेण योज्ये इति भावः । एतेन द्वन्द्वे एकदेशान्वयः
कथमित्यपास्तम् । अत एव 'दाप्प्रतिषेध' इति वार्त्तिके एकवचनम् । भाष्ये-

१ 'स्थाः शाखा वृक्षैकान्ता उपलभ्यन्ते' । २ क्वचिन्न ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

दिव औत्[1] । औत्सर्वादेशः प्राप्नोति ॥ दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः[2]– 'अदाब्दैपा'विति वक्तव्यम्[3] ॥ किं पुनः कारणं न सिध्यति ? ॥ 'अनाकारान्तत्वात्' । ननु चाऽऽत्त्वे कृते भविष्यति ॥ तच्चात्त्वं न प्राप्नोति ॥ किं कारणम् ? ॥ अनेजन्तत्वात् ॥ अस्तु तर्ह्यनेकान्तः ॥*॥ अनेकान्ते वृत्तिविशेषः ॥*॥ यद्यनेकान्तो, वृत्तिविशेषो न सिध्यति । क्ङिति ञ्णितीति कार्याणि न सिध्यन्ति ॥ किं हि स तस्येङ्गवति, येनेत्कृतं स्यात् ?॥ एवं तर्ह्यनन्तरः । ॥*॥ अनन्तर इति चेत्पूर्वोत्तरयोरित्कृतप्रसङ्गः ॥*॥ अनन्तर इति चेत्पूर्वोत्तर[4]-योरित्कृतं प्राप्नोति । वुञ्छण् ॥*॥ सिद्धं तु व्यवसितपाठात् ॥*॥ सिद्धमेतत् ॥ कथम् ?॥ [ 'व्यवसितपा[5]ठात्']॥ व्यवसितपाठः कर्तव्यः । वुञ्छण् । स चावश्यं व्यवसितपाठः[6] कर्तव्यः॥*॥ इतरथा ह्येकान्तेपि सन्देहः ॥*॥

प्र.]जन्तत्वादिति । यथा ढौकतेः ककारस्यैकान्तत्वादात्त्वं न भवत्येवं दैपोपि न प्राप्नोति । उपदेशग्रहणाच्च लुप्तेऽपि पकारे न प्राप्नोति । अस्तु तर्हीति । कार्यलक्षणाय केवलमनुबन्ध उपात्तो न तु तस्याऽवयवः । वृत्तिविशेष इति । बहुव्रीहिर्न सिध्यति–अनेकान्ते–क इद्यस्येति,सम्बन्धाऽभावात्। एवं तर्ह्यनन्तर इति। यद्यप्यनन्तरादिषु बहुव्रीहिर्न भवति, तथापीह वचनसामर्थ्याद्भवति । व्यवसित-

उ.]दिव औदिति । यद्यप्ययमुच्चारणार्थस्तथापि समभिव्याहृतवर्णोच्चारणे सहायसंपादकतया तस्य चारितार्थ्येन विधेयविषये विशिष्टस्यापि विधेयत्वसम्भावनासत्त्वादित्संज्ञालोपयोः प्रवृत्तयोर्बाधे मानाऽभावादुच्चारणार्थानामपीत्त्वमस्त्येव । किंच तदभावे उच्चारितस्य निवृत्तिः कथं स्यादिति भावः । एतेनोच्चारणार्थानामित्संज्ञा नेति नव्योक्तिः परास्ता । 'स्तीर्णे बर्हिषि समिधानेऽग्ना'वित्यादौ ङेरौतिखरित्वाऽभावस्तु छान्दसत्वादिति बोध्यम् । वृत्तेर्वा । न चोच्चारणार्थानामपीत्त्वे'णौ गमि'रित्याद्यादेशानां नुमापत्तिः, भाविधातुत्वमादाय तन्त्रेका निर्देशेनाऽदोषात् । अत एव सुवुत्पत्तिः । अन्यथा 'हनो वध लिङी'तिवत्सा न स्यात् । उच्चारणार्थानामपीत्त्वं च 'च्लेः सिच्' 'वेरपृक्तस्ये'त्यादौ भाष्ये स्पष्टमुक्तम् । अनुवाद्यविषये तूच्चारणार्थवर्णविशिष्टस्य तद्रहिते लक्षणा बोध्या । 'न विधौ परः शब्दार्थ' इति विधेयबोधके लक्षणाऽनौचित्यमिति दिक् । उपदेशग्रहणाच्चेति । यत्त्वादेच इति सूत्रे भाष्ये–'मीनातिमिनोतिदीङा'मिति सूत्रे एज्ग्रहणानुवृत्तिसामर्थ्यात्परनिमित्तकस्यैच आत्वं नेत्यर्थमाश्रित्योपदेशग्रहणं प्रत्याख्यातम्, तत्तु 'मीनातिमिनोती'तिसूत्रस्थभाष्यविरोधादेकदेश्युक्तिः । तत्र ह्यवदार्तसिद्धये एज्विषये आत्त्वमिति सिद्धान्तितं, नहि तदोक्तार्थज्ञापकत्वं तस्येति भावः । अनेकान्तत्वे उपदेशानर्थक्यमत आह–कार्यलक्षणायेति । कार्यप्रवृत्तये इत्यर्थः । वचनसामर्थ्या-

१ 'दिव औत्सर्वादेशः' । २ 'दाप्रतिषेधे'। ३ 'कर्त्तव्यम्'। ४ 'पूर्वपरयोरि'। ५ छसं स्यात् । ६ व्यवसितःपाठः । ७ क्वचिन्न । ८ 'वदान'।



CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

अक्रियमाणे व्यवसितपाठे एकान्तेऽपि सन्देहः स्यात् । तत्र न ज्ञायते किमयं पूर्वस्य भवत्याहोस्वित्परस्येति ॥ सन्देहमात्रमेतद्भवति, सर्वसन्देहेषु चेदमुपतिष्ठते 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षण'मिति। पूर्वस्येति व्याख्यास्यामः ॥*॥ वृत्ताद्वा ॥*॥ वृत्ताद्वा पुनः सिद्धमेतत्। वृद्धिमन्तमाद्युदात्तं दृष्ट्वा ञिदिति व्यवसेयम् । अन्तोदात्तं दृष्ट्वा किदिति ॥

युक्तं पुनर्यद्वृत्तनिमित्तको नामाऽनुबन्धः स्यान्नाऽनुबन्धनिमित्तकेन नाम वृत्तेन भवितव्यम् ॥ वृत्तनिमित्तक एवानुबन्धः । वृत्तज्ञो ह्याचार्योऽनुबन्धानासजति ॥

उभयमिदमनुबन्धेषूक्तमेकान्ता अनेकान्ता इति, किमत्र न्याय्यम् ?॥ 'एकान्ता' इत्येवं न्याय्यम् ॥ कुत एतत् ?॥ अत्र हि हेतुर्व्यपदिष्टो, यत्र नाम सहेतुकं तन्न्याय्यम् ॥ ननु चोक्तं 'तत्राऽसरूपसर्वादेशदाप्प्रतिषेधे पृथक्त्वनिर्देशोऽनाकारान्तत्वा'दिति ॥ असरूपविधौ तावन्न दोषः । आचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमसारूप्यं भवती'ति, यदयं 'ददातिदधात्योर्विभाषे'ति विभाषां शास्ति ॥ यदप्युक्तं—'सर्वादेश' इति । अत्राप्याचार्यप्रवृत्तिर्ज्ञापयति—'नानुबन्धकृतमनेकाल्त्वं भवती'ति, यदयं'शित्सर्वस्ये'त्याह॥ यदप्युक्तं—'दाप्प्रतिषेधे पृथक्त्वनिर्देशः कर्तव्यः'इति । न कर्तव्यः । आचार्य-

प्र.]पाठादिति । व्यवसितानां-विच्छिन्नानां पाठः कर्तव्यः । ततः पूर्वस्यैवाऽसावनन्तरो न तु परस्य, कालव्यवधानात् । व्याख्यानत इति । एकान्तपक्षे एकोऽवयवो द्वयोर्न भवतीति सन्देहे व्याख्यानान्निश्चयः।अनेकान्तत्वे त्वानन्तर्यस्योभयापेक्षस्य विरोधाऽभावाद्व्यवसितपाठ एव कर्तव्यः। वृत्ताद्वेति। वृत्तं—प्रयोगः । नन्वाचार्यो भवतु वृत्तज्ञः,शिष्यास्तु कथं प्रतिपद्यन्ते?। व्याख्यानाच्चेत् , पूर्वमेवैतदुक्तम्। वृत्ताद्वेत्यनेन किं तदेवोच्यते ?। नैष दोषः । पूर्वं हेतुरहितं व्याख्यानमुक्तम्। 'वृत्ताद्वे'त्यनेन हेतुरुच्यते । तस्मिन् प्रतिपन्ने साध्यं स्वयमेवाऽवैति । भाष्यकारप

उ ]दिति । सौत्रत्वादिति भावः । अनन्तरेऽप्यवयवत्वारोपेणेति भाव इत्यन्ये। हलन्त्यसूत्रनिर्णीतधातुत्वादिना परिच्छिन्नस्वरूपव्यवसितत्वस्याऽत्राऽसंभवादाह-विच्छिन्नानामिति । नन्वनेकान्तत्वेऽपि व्याख्यानान्निर्णयोऽत आह—अनेकान्तत्वे त्विति । विरोधाऽभावादिति । एवं च सन्देहाऽभावान्न व्याख्यानप्रवृत्तिरिति भावः । विरुद्धाऽनेककोटिविषयज्ञानस्यैव सन्देहत्वादिति तात्पर्यम् । व्याख्यानाच्चेदिति । व्याख्यातारोऽत्र प्रत्ययादावीदृशः प्रयोग इति व्याख्यास्यन्ति। तत्र च तत्तकार्यं दृष्ट्वा तस्य तस्य तत्तदनुबन्धत्वं निर्णेष्यन्तीत्यर्थः । पूर्वं हेत्विस्यादि ।'अस्यायमवयव'इत्यादिरूपम् । तस्मिन्नित्यादि । वृत्तरूपे हेतौ गुरुमुखा-

१ क्वचिन्न । २ 'एतन्न्याय्यम्' । ३ 'त्योर्विभाषा' । ४ 'तत्रा' ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रवृत्तिर्ज्ञापयति 'नानुबन्धकृतमनेजन्तत्वं भवती'ति, यदयमुदीचां माङो-व्यतीहारे इति मेङः सानुबन्धकस्याऽऽत्वभूतस्य ग्रहणं करोति ॥

यथासङ्ख्यमनुदेशः समानाम् ॥ १।३।१० ॥

किमिहोदाहरणम् ? ॥ इको यणचि । दध्यत्र मध्वत्र ॥ नैतदस्ति । 'स्थानेन्तरतमेनाप्येतत्सिद्धम् ॥ कुत आन्तर्यम् ? ॥ तालुस्थानस्य

प्र.]वा तदुक्तम् ,इदं तु वार्तिककारेण। मेङ इति। यद्यप्यनेकान्तपक्षस्यापि ज्ञापक-मेतद्व्याख्यातुं युज्यते तथापि हेतुरहितत्वादिहाऽनेकान्तपक्षो भाष्यकृता त्यक्तः । प्रदेशान्तरे(षु)त्वनेकान्तपक्षेणाऽपि व्यवह्रियते–'सिद्धमनुबन्धस्यानेकान्तत्वा'दिति॥

यथासङ्ख्यमनु । सङ्ख्यानं गणनमुच्यते । अनुदेशशब्दस्य सम्बन्धिशब्द-त्वादुद्देश्याक्षिप्तः । तेनायमर्थः —'समानां समसङ्ख्यानां मध्ये यथागणनमुद्देशिभिः सहानुदेशिनः सम्बध्यन्ते'। इको यणचीति । इक्शब्देन चत्वारः स्थानिनः प्रत्या-य्यन्ते, यण्शब्देनापि चत्वार आदेशा इत्यर्थतोऽस्ति सङ्ख्यासाम्यम् । पश्चात्तु

उ.]दवगते सत्युक्तव्याख्यानविषयसौध्यं स्वयमेव जानातीत्यर्थः । नन्वेवं पूर्वोक्त-समर्थनरूपतया पक्षान्तरत्वाऽभावेन 'वा'शब्दाऽसामञ्जस्यमत आह–भाष्येति । वस्तुतस्तु विरम्य पाठे तस्य कर्त्तव्यता, वुञ्छणादिसूत्रे द्वन्द्वानुपपत्तिर्बहु-वचनानुपपत्तिश्चेत्यरुचेर्वार्त्तिककारस्य वृत्ताद्वेति परिहारान्तरम् । तत्रैकान्त-पक्षेऽसन्देहाय व्याख्यानं शरणमित्युक्तं भाष्यकृतेति न पौनरुक्त्यशङ्केति ध्येयम् ।

भाष्ये–एकान्ता इत्येव न्याय्यमिति।अनवयवत्वे णशकानां णादेरित्त्वाऽना-पत्तिः, प्रत्ययादित्वाऽभावात् । एवमन्त्यत्वाऽभावादिशादेः शस्येत्वाऽनापत्तिः । अन्त्यादिशब्दयोः परपूर्वसमीपबोधकत्वे लक्षणैव दोषः। किं च दघ्नचश्चस्य वैयर्थ्या-पत्तिः। 'वुञ्छण्कठ'जितिविहितके णित्त्वप्रयुक्तवृद्ध्यापत्तिश्चेति भावः। हेतुरहितत्वा-दित्युपलक्षणम् । प्रदेशान्तरेषु त्विति । एवं च तत्र सैकदेश्युक्तिरिति भावः ।

यथासङ्ख्य। सङ्ख्याशब्दस्यैकत्वादिरूढस्य ग्रहणे वाक्यार्थानुपपत्तिरतो यौगिक इति व्याचष्टे—सङ्ख्यानमिति । गणनं। तत्क्रम इत्यर्थः । सूत्रे–अनुदेशः–पश्चा-दुच्चार्यमाणसंबन्धः । अत्रोद्देश्यनुदेशिन उच्चार्यमाणा, उच्चार्यमाणशब्दप्रतिपाद्याश्च । उद्देश्यनुदेशिशब्दौ पूर्वोच्चार्यमाण-पश्चादुच्चार्यमाणपरौ,न तूद्देश्यविधेयपरौ, 'असूर्य-ललाटयो'रित्यादौ यथासङ्ख्याऽनापत्तेः । समशब्दो न सर्वपर्यायः, सुडापत्तेः, किंतु सङ्ख्यासाम्यपरः । नन्विक्शब्देन षट्षष्टेर्यण्शब्देन सप्तानां चोपस्थित्या सङ्ख्या-साम्याऽभावात्कथं यथासङ्ख्यमत आह—इक्शब्देनेति । पश्चात्त्विति । इक्पदो-पस्थितेकारादिभिर्गृहीतदीर्घादिघटितवाक्यार्थबोधे इत्यर्थः । वस्तुतस्तेषामनुच्चारित-

१'तम इत्येव सिद्धं'।'तमेड्यनेनाप्येत'। २ 'कुतः ? । आन्तर्यतः'। ३'घ्यत्वमेव'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

तालुस्थान ओष्ठस्थानस्यौष्ठस्थानो भविष्यतीति ॥ इदं तर्हि 'तस्थस्थमि तांतंताऽम'इति ॥ ननु चैतदपि स्थानेऽन्तरतमेनैव सिद्धम् ॥ कुत आन्त र्यम् ? ॥ एकार्थस्यैकार्थो, द्व्यर्थस्य द्व्यर्थो, बह्वर्थस्य बह्वर्थो भविष्यतीति । इदं तर्हि 'तूदीशलातुरवर्मतीकूचवाराड्ढक्छण्ढञ्यक' इति॥ किमर्थम्पुनरि मुच्यते ॥*॥ संज्ञासमासनिर्देशात्सर्वप्रसङ्गोऽनुदेशस्य, तत्र यथासङ्ख्यवचनं नि मार्थम् ॥*॥ संज्ञया समासैश्च निर्देशाः क्रियन्ते । संज्ञया तावत्–'परस्मै पदानां णलतुसुस्थलथुसणल्वमाः' इति । समासैः–'तूदीशलातुरवर्मतीकूच वाराड्ढक्छण्ढञ्यकः'इति।'संज्ञासमासनिर्देशात्'।एतस्मात्कारणात्'सर्वप्रसङ्गः सर्वस्योद्देशस्य सर्वोऽनुदेशः' प्राप्नोति । इष्यते च समसङ्ख्यं यथा स्यादिति। तच्चान्तरेण यत्नं न सिध्यतीति तत्र यथासङ्ख्यवचनं नियमार्थम् । एवमर्थ

प्र.]यद्यपीकारादिभिर्बहूनां ग्रहणाद्वैषम्यं,तथापि प्रथमतोऽस्त्येव सङ्ख्यासाम्यमिद तर्हीति । नाऽत्र स्थानकृतमान्तर्यमस्ति, नाप्यादेशप्रवृत्तिकालेऽर्थकृतान्तर्यसम्प्र त्ययः, प्रवृत्तानामादेशानां स्थान्यर्थाऽभिधानात् । ननु चेति । नित्यानां शब्दा प्रयोगादर्थकृतमान्तर्यमस्त्येवेति भावः । किमर्थमिति । पाठक्रमेणैव संबन्धो भवि ष्यतीति भावः। संज्ञासमासनिर्देशादिति। 'परस्मैपदानां णलतु'सित्यत्र संज्ञ सर्वे युगपत्प्रत्याय्यन्ते इति नास्ति पाठक्रमाद्यवस्था। लोकेऽप्य'जाविधनौ देवदत्त यज्ञदत्ता'विति समासनिर्देशे नास्ति क्रमनियमः । द्वन्द्वेऽनेकावयवात्मकः समुद

उ.]त्वेन न ग्राहकत्वं,किं त्विक्शब्दादिना,इक्त्वेन यण्त्वेन चाऽइउणित्यादौ तत्तद्व विशेषणतया गृहीतजातिचतुष्टयोपस्थितिरिति यथासङ्ख्यनिर्वाहः। 'पश्चात्' 'प्रथम इत्यादि तु चिन्त्यमेव। न च जातिपक्षे सावर्ण्येन ऋकारऌकारयोः परस्परजात्य देश एव वाच्य इति ऋकारस्य ऌकारापत्तिः।ऋदित्ऌदिदिति भेदेन तदतिदेशाऽनि त्यत्वेनाऽदोषादनभिधानाद्वेति बोध्यम्। भाष्ये–स्थानेन्तरतमेनापीति । स्थानेन्तर तमपदघटितेन सूत्रेणेत्यर्थः।नन्वत्राऽप्यर्थत आन्तर्यादेव सिद्धमत आह–नापीति। विशिष्याऽर्थाऽपरिज्ञानादिति भावः । लक्षणशरणानां प्राक् शास्त्रात्प्रयोगाऽज्ञाने ऽर्थविशेषनिर्णयो दुर्लभोऽत आह–नित्यानामिति।साधुत्वमात्रं शास्त्रैकगम्यं,प्रयो तदर्थज्ञानं तु प्राक् शास्त्रादप्यस्त्येव पाणिनेः । अन्येषां तु व्याख्यानाद्बोध इति भावः । पाठेति । लोकसिद्धस्थानाख्यप्रमाणेनैव 'शत्रुं मित्रं विपत्तिं च जय रञ्ज भञ्जये'तिवत्सिद्धिरिति । युगपदिति। परस्मैपदत्वेनेत्यर्थः । एवं च क्रमो नास्ती भावः । यद्यपि संज्ञा प्रत्येकं पर्याप्तेति न संज्ञाकृतं युगपत्प्रत्यायनं, किं त्वेकश प्रभावलभ्यं 'तद्ब्राह्मणानामर्घपाद्याचमनीयानी'तिवत्। तत्र ब्राह्मणत्रित्वेपि नार्घादि

१ क्वचिन्न । २ 'सर्वानुदेशः' । ३ 'द्वन्द्वेनाने' ।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

मिदमुच्यते ॥ किं पुनः कारणं संज्ञया च समासैश्च निर्देशाः क्रियन्ते ? ॥ ॥*॥ संज्ञासमासनिर्देशः पृथग्विभक्तिसंज्ञ्यनुच्चारणार्थः॥*॥ संज्ञया च समासैश्च निर्देशाः क्रियन्ते—,पृथग्विभक्तीः संज्ञिनश्च मोच्चीचर'मिति ॥*॥ प्रकरणे च सर्वसंप्रत्ययार्थः॥*॥प्रकरणे च सर्वेषां संप्रत्ययो यथा स्यात्–विदो लटो वेति ॥

किं पुनः शब्दतः साम्ये सङ्ख्यातानुदेशो भवत्याहोस्विदर्थतः ? ॥ कश्चात्र विशेषः?॥ ॥*॥ सङ्ख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः

प्र.]एकेनैव [शब्देन] प्रत्याय्यत इति कुतः क्रमनियमः स्यात्। किं पुनरिति।तिपो णल्,तसोऽतुसित्यादि कस्मान्न क्रियत इति प्रश्नः। विदो लटो वेति। पृथग्निर्देशे क्रियमाणे 'मसो म' इत्येवानन्तर्यात्सम्बध्येतेत्यर्थः।व्यवहितानामपि स्वरितत्वादनुवृत्तावाश्रीयमाणायां प्रतिपत्तिगौरवप्रसङ्गः। किं पुनरिति। यद्यप्यर्थे शब्दस्य गुणभावादर्थत एव साम्यं न्याय्यं तथापि शब्दधर्मेणाऽप्यर्थस्य व्यपदेशो दृश्यते यथा 'भ्रमर' शब्दस्य द्विरेफत्वाद्विरेफो भ्रमरः। तथा द्व्यक्षरं मांसं द्व्यक्षरमस्थि। तस्माच्छब्दतोऽपि साम्यमत्राशङ्कितम्। णलादय इति। परस्मैपदशब्देन प्रकृतानामेव नवानां ग्रहणं न तु शतृक्वस्वोरित्यर्थतः साम्यमस्ति, न तु शब्दतः। डारौ-

उ.]क्रमनियमः,ततथापि संज्ञाया नवकसाधारण्यमेव तत्र मूलमिति'संज्ञानिर्देशा'दित्युक्तम्। एकेनैवेति। अवयवानां समुदायोपसर्जनतया समुदायस्यैव पदान्तरार्थेनाऽन्वयादिति भावः। समासेनैकोपस्थितेः पृथगुपस्थित्यभावेन तथाऽन्वयो वक्तुमशक्य इति तत्त्वम्। भाष्ये—सर्वस्योद्देशस्येति। सर्वस्योद्देशिन इत्यर्थः। सर्वोनुदेश इति। सर्वेऽनुदेशिन इत्यर्थः। तिपो णलिति। यद्यप्येषाऽपि 'स्वं रूप'मिति संज्ञा,तथापि संज्ञाशब्दो बहूनां युगपत्प्रत्यायको यः शब्दस्तत्पर इति भावः। प्रतिपत्तीति। स्वरितत्वस्य लक्ष्यसिद्ध्युन्नेयतया विना शास्त्रमस्मदादिभिर्दुर्ज्ञेयत्वादिति भावः। संज्ञया समासेन च निर्देशे सति तस्यैवोत्तरसूत्रेऽनुवृत्तेर्न दोष इति तात्पर्यम्। एवं चैतत्सूत्रारम्भसामर्थ्यात्सूत्रान्तरस्थमुपसर्जनावयवकृतं च क्रमं गृहीत्वा यथासङ्ख्यप्रवृत्तिरिति तत्त्वम्। अत्र वदन्ति—यद्यपि समासत उपस्थितिरेकैव, तथाप्येतत्सूत्रारम्भसामर्थ्यात् पृथग्वाक्यकल्पनया बोधान्तरं कल्प्यते। एवं चेदं सूत्रं द्वन्द्वसमासनिर्दिष्टसंबन्धिनोस्तथान्वयेपि द्वन्द्वस्य साधुत्वं बोधयति स्वशास्त्रे, तेन लोके 'आद्यन्तौ वर्णानां विप्रशूद्रा'वित्यादेः साधुत्वं नेति। शब्दधर्मेणापीति। वाच्यवाचकयोरभेदोपचारादिति भावः। ननु 'शब्दतः सङ्ख्यया समानां योऽनुदेशः पश्चादुच्चार्यमाणसंबन्धः स यथासङ्ख्य'मिति सूत्रार्थे 'परस्मैपदाना'मित्यादौ तादृशानां पश्चादुच्चार्यमाणसंबन्ध एव नेति क्व यथासङ्ख्यप्राप्तिरतो व्यत्ययेन पठति—णलादय इति। विधेयताप्रतीतौ तु न पश्चात्त्वं नियामकं, 'लोपो व्यो'रि-

१ 'एकैकेन प्रत्याय्यते'। 'एकैकेन'। २ क्वचित्।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

प्रथमस्याऽयवायाव एच इत्यनिर्देशः॥*॥ सङ्ख्यासाम्यं शब्दत श्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः। अगमको निर्देशोऽनिर्देशः।'परस्मैपदानां णलतुसुस्थलथुसणल्वमाः' इति। णलादयो बहवः, परस्मैपदाना'मित्येकः शब्दः। वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति॥ डारौरसः प्रथमस्य। डारौरसो बहवः, प्रथमस्येत्येकः शब्दः। वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति॥ 'एचोऽयवायावः'। अयवायावो बहवः,एच इत्येकः शब्दः।वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥ अस्तु तर्ह्यर्थतः ॥*॥ अर्थतश्चेल्ललुटोर्नन्चरीहणसिन्धुतक्षशिलादिषु दोषः ॥*॥ अर्थतश्चेल्लृलुटोर्नन्चरीहणसिन्धुतक्षशिलादिषु दोषो भवति। 'स्यतासी लृलुटोः'। स्यतासी द्वौ

प्र.]रस इति।यदा डारौरसश्च डारौरसश्चेत्येकशेषः क्रियते तदाऽर्थतः सङ्ख्यासाम्यमस्ति। अगमक इति। सङ्ख्यासाम्यस्याऽनवबोधक इत्यर्थः। लृलुटोरिति। लृशब्दस्य लृङ्लृटावर्थाविति साम्याऽभावः। यदा तु लृरूपं सामान्यमर्थो लृशब्दस्येति पक्षस्तदाऽस्त्येव साम्यमिति दोषाऽभावः।नन्द्यादिष्वप्यवयवेन विग्रहः समुदायः समासार्थ इत्याश्रीयमाणे समुदायत्रयापेक्षया प्रत्ययत्रयस्य साम्यसद्भावाद्दोषः। आत्मनेपदेति। नन्वात्मनेपदसंज्ञा न तङ्शब्दस्य किं तु तत्प्रत्यायितानां नवानां तादीनामिति नाऽस्त्यर्थतः साम्यम्?।नैष दोषः।तङ्रूपापन्नास्तादय आत्मने-

उ.]त्यादौ व्यभिचारादिति भावः। ननु शतृक्वस्वोरिति। व्याख्यानादिति भावः। अन्यथा शतृक्वसुभ्यामेकादश परस्मैपदशब्दाऽर्था इत्यर्थतः साम्येपि न यथासङ्ख्यं स्यादिति तात्पर्यम्। न तु शब्दत इति। यद्यप्येक एव द्वन्द्वो युगपदेवानेकोपस्थितिजनक इत्यस्ति शब्दतः साम्यं, तथापि प्रत्येकपदशक्तिज्ञानसहकारेणैव न तथेति नास्ति शब्दतः साम्यम्। 'परस्मैपदाना'मित्यत्र त्वेकशेषेऽपि श्रूयमाणैकपदशक्त्यैव नवकोपस्थितिरिति भावः। ननु परस्मैपदात्मनेपदभेदात्प्रथमः षडित्यर्थपक्षेऽपि न साम्यमत आह—यदेति। भाष्ये—अगमक इति। 'अनिर्देश' इत्यत्र मध्यमपदलोपी समास इति भावः। ननु स्थान्यादेशभावाऽवगतिरस्त्येवेत्यत आह–सङ्ख्येति। सामान्यमिति। लृत्वजातिपरो निर्देशः अत एव द्विवचनसङ्गतिरिति भावः। समुदाय इति। समुदायत्रयमित्यर्थः। प्रत्ययोत्पत्तिस्तु समुदायस्याऽप्रयोगात्प्रत्यवयवं पर्यवस्यतीति भावः। तद्रूपापन्ना इति। संज्ञाशब्दे स्वरूपस्यैवं प्रवृत्तिनिमित्तत्वादेकतङ्शब्दरूपिततया तङ्त्वेनैवोपस्थितानां संज्ञेति संज्ञासूत्रस्थमार्थं साम्यमादाय स्याद्यथासङ्ख्यमिति भावः। क्वचित्तु'तङ्रूपापन्ना' इत्येव पाठः। ननु यत्र द्वावुपादीयेते श्नमस्ती, सार्वधातुकग्रहणं

१ क्वचिन्न। २ 'तद्रूपा'। ३ 'तङ्रूपा'। ४ एवः क्वचिन्न।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

ललुटोरित्यस्य त्रयोऽर्थाः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' । नन्द्यादयो बहवो, ल्युणिन्यचस्त्रयः । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति ॥ [ 'वुञ्छ[1]ण्कठजिलसेनिरढञ्ण्ययफक्फिञिञ्ञ्यकक्ठकोऽरीहणकृशाश्वर्श्यकुमुदकाशतृणप्रेक्षाश्मसखिसङ्काशबलपक्षकर्णसुतङ्गमप्रगदिन्वराहकुमुदादिभ्यः'] ॥ अरीहणादयो बहवो, वुञादयः सप्तदश । वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति॥'सिन्धुतक्षशिला[2]दिभ्योऽणञौ'।सिन्धुतक्षशिलादयो बहवोऽणञौ द्वौ, वैषम्यात्सङ्ख्यातानुदेशो न प्राप्नोति॥*॥आत्मनेपदे[3]विधिनिष्ठासार्वधातुकद्विग्रहणेषु ॥*॥ आत्मनेपदविधिनिष्ठासार्वधातुकद्विग्रहणेषु च दोषो भवति ॥ आत्मनेपदविधिश्च न सिध्यति—'अनुदात्तङित आत्मनेपदम्'। अनुदात्तङितौ द्वौ, आत्मनेपदमित्यस्य द्वावर्थौ । तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥ निष्ठा—'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति । रेफदकारौ द्वौ,'निष्ठे'त्यस्य द्वावर्थौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति । सार्वधातुकद्विग्रहणेषु च दोषो भवति—'श्नसोरल्लोपः' । श्नमस्ती द्वौ, 'सार्वधातुक'मित्यस्य द्वावर्थौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥*॥ एङः पूर्वत्वे प्रतिषेधः ॥*॥ एङः पूर्वत्वे[4] प्रतिषेधो वक्तव्यः । 'एङः पदान्तादति' 'ङसिङसोश्च' । ङसिङसौ द्वौ, 'ए'ङित्यस्य द्वावर्थौ । तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥

अस्तु तर्हि शब्दतः॥ननु चोक्तं 'सङ्ख्यासाम्यं शब्दतश्चेण्णलादयः परस्मैपदानां डारौरसः प्रथमस्याऽयवायाव एच इत्यनिर्देशः' इति ॥ नैष दोषः । 'स्थानेऽन्तरतम' इत्यनेन व्यवस्था भविष्यति ॥ कुत आन्तर्यम्[5]?॥एकार्थस्यैकार्थौ, द्व्यर्थस्य द्व्यर्थौ, बह्वर्थस्य बह्वर्थः, संवृतावर्णस्य संवृतावर्णौ,विवृताऽवर्णस्य विवृताऽवर्णः ॥*॥ अतिप्रसङ्गो गुणवृद्धिप्रतिषेधे क्ङिति ॥*॥ अतिप्रसङ्गो भवति गुणवृद्धिप्रतिषेधे क्ङिति । गुणवृद्धी द्वे, क्ङितौ द्वौ । तत्र सङ्ख्यातानु-

प्र.]पदशब्देन प्रत्याय्यन्त इत्यस्ति साम्यम्।सार्वधातुकद्विग्रहणेष्विति। द्वौ गृह्येते येषु तानि द्विग्रहणानि, सार्वधातुकस्य द्विग्रहणानीति समासः । सार्वधातुकमपि तेषु गृह्यत इति तेन विशेष्यन्ते । संवृताऽवर्ण इति । यद्यपि शास्त्रेऽकारस्य विवृतोपदेशः कृतस्तथापि लौकिकप्रयोगापेक्षयैतदुक्तम् । क्ङितौ द्वाविति।क्ङिच्छब्द-

उ.]चास्ति तत्र न स्यादिति वक्तव्येऽगमकोयं निर्देशोऽत आह—द्वाविति। अधिकरणसाधनग्रहणशब्देन द्विशब्दस्य षष्ठीसमासस्ततः पुनः सार्वधातुकपदेन स इति भावः।सार्वधातुकपदेन षष्ठीसमासे षष्ठीप्रयोजकसंबन्धं दर्शयति—सार्वधातुकमपीति।
अथ शब्दतः साम्ये उक्तदोषोद्धारमाह भाष्ये—अस्तु तर्हीति।एकार्थस्येत्यादि। प्रत्यक्त्वादिकमप्युपलक्ष्यतेऽनेनेति बोध्यम्।यद्यपीति।एवं च'संवृताऽवर्णस्ये'त्ययुक्त-

१छसं स्यात्।२ 'शिलादिभ्याम'।३ 'पदनिष्ठाविधि'।४'पूर्वरूपत्वे'। ५ 'आन्तर्यतः' ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

देशः प्राप्नोति ॥ नैष दोषः । गकारोऽप्यत्र निर्दिश्यते ॥ तत्तर्हि गकारग्रहणं कर्तव्यम् ॥ न कर्तव्यम् । क्रियते न्यास एव । ककारे गकारश्चर्त्वभूतो निर्दिश्यते । गिति[2] किति ङितीति ॥*॥ उदि कूले रुजिवहोः ॥*॥ [ अतिप्रसङ्गो भवति—उदि कूले रुजिवहोः ] । उदिकूले द्वे, रुजिवही द्वौ, तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥ नैष दोषः । नोदिरुपपदम् ॥ किं तर्हि ?॥ विशेषणं रुजिवहोः। 'उत्पूर्वाभ्यां रुजिवहिभ्यां कूल उपपद' इति॥ ॥*॥ तच्छीलादिषु धातु[4]त्रिग्रहणेषु ॥*॥ तच्छीलादिषु धातुत्रिग्रहणेषु दोषो भवति ॥ 'विदिभिदिच्छिदेः कुरच्' ॥ विदिभिदिच्छिदयस्त्रयः,तच्छीलादयस्त्रयः । तत्र[5] सङ्ख्याताऽनुदेशः प्राप्नोति ॥*॥घञादिषु द्विग्रहणेषु ॥*॥ घञादिषु द्विग्रहणेषु दोषो भवति । 'निरभ्योः पूल्वोः' । निरभी द्वौ, पूल्वौ द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥ नैष दोषः। इष्यते चाऽत्र सङ्ख्यातानुदेशः। निष्पावः अभिलाप इति॥एवं तर्हि—'अकर्तरि च[7] कारके भावे चे'ति द्वौ,पूल्वौ द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति॥*॥ अवे तॄस्त्रोः करणाऽधिकरणयोः ॥*॥

प्र.]स्यैकत्वेपि ककारङ्कारयोर्ङित्वादस्ति शब्दतः साम्यम् । उदि कूल इति। द्वन्द्वोऽयम् । आगन्तुना चेकारेण निर्देश इति चोद्यम् । 'उदी'ति पञ्चम्याः स्थाने सप्तमी कृता । 'उदः पराभ्यां रुजिवहीत्येताभ्या'मिति परिहारः । धातुत्रिग्रहणेष्विति । त्रीणि ग्रहणानि येषां ते त्रिग्रहणा धातवः । त्रिग्रहणा येषु तच्छीलादिषु

उ.]मिति भावः। लौकिकेति । केचित्तु 'ए' 'ओ' इत्यनयोः संवृताऽवर्णत्वे मानाऽभावः, ह्रस्वाऽकारव्यतिरिक्तानां विवृतत्वस्यैवाऽइउण्सूत्रभाष्ये उक्तत्वात्प्रत्यापत्तिशास्त्रस्याऽवयवे प्रवृत्तौ मानाऽभावाच, शास्त्रदृष्ट्या तस्याऽसिद्धत्वाच्च चिन्त्यमिदमित्याहुः। अन्येत्वेतद्भाष्यप्रमाण्यादेओ इत्यनयोरकारांशे संवृतत्वमेव, इतरांशे एव विवृततरत्वम् । तदुपरागाच न संवृतत्वस्य लोके प्रयोगे स्पष्टमवभासः। 'ऐ''औ' इत्येतयोस्त्वकारांशेऽपि विवृतत्वमेवेत्याहुः । 'अतिप्रसङ्ग'इत्यादिना वक्ष्यमाणदोषाऽसाधारणत्वादाद्यदोषः शब्दसाम्यपक्षे नाऽऽरोहतीत्यतस्तं तत्रोपपादयति-क्ङिच्छब्दस्येति । भाष्ये—गकारोपीति । स्थास्नुरित्यत्रेत्त्वाऽभावाय क्स्नोर्गित्त्वावश्यकत्वेन जिष्णुरित्यत्र गुणाऽभावाय तन्निर्देश इति भावः। 'उत्कूले द्वे'इति वाच्ये'उदिकूले' इति इकारसहितः पाठो व्याख्यानभाष्येऽयुक्त इत्यत आह—आगन्तुनेति । वस्तुत 'उदिकूले' इत्यनुकरणम्। इति द्वे शब्दरूपे इत्यर्थ इति न दोषः। सप्तमीविभक्तिसाम्येऽर्थवैरूप्यमनुपपन्नमत आह—उदीतीति । एवं 'रुजिवहो'रित्यपि पञ्चम्याः

१'तद्गकार'।२'किति गिति'।३इदं लुप्तं स्यात्।४'धातुषु'।५क्वचिन्न ।६'घञादिद्विग्रह'। ७अत्र—''अकर्त्तरि च कारके''इति पृथग्वार्तिकं क्वचिल्लिखितपुस्तके दृश्यते। परं तन्न युक्तं यतः पूर्ववार्तिकस्यैवेदं व्याख्यानमिति पर... 'विवृतत्व'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

[अंवे तृस्नोः करणाधिकरणयोर्दोषो भवति]॥तृस्नौ द्वौ,करणाधिकरणे द्वे। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥*॥ कर्तृकर्मणोश्च भूकृञोः ॥*॥ [ कर्तृकर्मणोश्च भूकृञोर्दोषो भवति ]। कर्तृकर्मणी द्वे, भूकृञौ द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥*॥ अनवक्लृप्त्यमर्षयोरकिंवृत्तेपि ॥*॥ [ अंनवक्लृप्त्यमर्पपरिकिंवृत्तेऽपि दोषो भवति]। अनवक्लृप्त्यमर्षौ द्वौ,किंवृत्ताऽकिंवृत्ते द्वे। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥*॥ कृभ्वोः क्त्वाणमुलौ ॥*॥ [ कृभ्वोः क्त्वाणमुलौ दोषो भवति ]॥ कृभ्वौ द्वौ, क्त्वाणमुलौ द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥ ॥*॥ अधीयानविदुषोश्छन्दोब्राह्मणानि ॥*॥ [ अंधीयानविदुषोश्छन्दोब्राह्मणानि दोषो भवति]। छन्दोब्राह्मणानीति द्वे,अधीते वेदेति च द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति॥*॥रोपधेतोः पथिदूतयोः॥*॥[रोपधेतोः पथिदूतयोर्दोषो भवति]॥ 'रोपधेतोः प्राचाम्''तद्गच्छति पथिदूतयोः'।रोपधेतौ द्वौ, पथिदूतौ द्वौ। तत्र सङ्ख्यातानुदेशः प्राप्नोति ॥*॥ तत्र भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च ॥*॥[तत्रं भवस्तस्य व्याख्यानः क्रतुयज्ञेभ्यश्च दोषो भवति] ॥ तत्रभवस्तस्य व्याख्यानौ द्वौ, क्रतुयज्ञौ द्वौ।तत्र सङ्ख्यातानुदेशः प्राप्नोति॥*॥सङ्ख्यादिष्वक्प्रभृतयः ॥*॥ सङ्ख्यादिष्वक्प्रभृतयः सङ्ख्यातानुदेशेन न सिध्यन्ति ॥

---

प्र.]इति पुनर्बहुव्रीहिः।कर्तृकर्मणोरिति। भवतेरकर्मत्वात्कर्त्तैवोपपदम्। करोतेस्तूपपदद्वये खलिष्यते। अन्ये तु प्राप्त्यर्थस्य भवतेरुपपदद्वये प्रत्ययमिच्छन्ति। छन्दोब्राह्मणानीति। गोवलीवर्दन्यायेन छन्दःशब्देन मन्त्राणां ग्रहणम्। यथा 'जुष्टार्पिते च छन्दसी'ति ब्राह्मणानां ग्रहणं, नित्यं मन्त्र इति मन्त्रग्रहणात्। छन्दोग्रहणेनैव तु ब्राह्मणानां ग्रहणे सिद्धे ब्राह्मणविशेषप्रतिपत्त्यर्थं पुनर्ब्राह्मणग्रहणं कृतम्।

---

उ.]स्थाने षष्ठीति बोध्यम्। भाष्ये—एवं तर्ह्यकर्त्तरि चेति।विशेषणविशेष्यभावापन्नार्थवाचकत्वादकर्त्तरि कारक इत्येकः शब्दो, 'भाव' इत्यपर इति शब्दतः साम्ये एषं दोषः। अर्थतः साम्यं तु न, कारकाणां बहुत्वादिति बोध्यम्।

ननु भवतेरकर्मकत्वात्कर्तर्येव, करोतेस्तु सकर्मकत्वात्कर्मण्येवेति यथासङ्ख्यमिष्टमेवेति भ्रमं वारयति—भवतेरिति। अन्ये त्विति। अत एव—''हृतदारतयाऽतिकोपनः शरणं किं रघुपुङ्गवो भवेत्'। इति रावण! मा कृथा मतिं स किलेशः शरणम्भवो विभुः'' इति 'तर्किताऽशरणताकः सुखेन शरणत्वेन प्राप्य' इत्यर्थकमुपपन्नमिति भावः। गोवलीवर्दन्यायेनेति। ब्राह्मणवसिष्ठन्यायस्योपलक्षणं, गोवलीवर्दयोः सामान्यविशेषभावस्यैकशेषप्रकरणान्ते भाष्ये उक्तत्वात्। तथा पृथग्ब्राह्मणग्रहणे फलमाह—छन्द इति। वस्तुतो गायत्र्यादिछन्दोवद्वेषु मन्त्रेष्वेव

---

१क्षमं स्यादिति मन्ये। २'व्याख्यातः'। ३'व्याख्यात इति'। ४ क्वचिन्न। ५'एव'।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

ननु चोक्तम्–'आरम्भपूर्वको [विराम'] इति। नावश्यमयं रमिः प्रवृत्तावेव वर्तते ॥ किं तर्हि ? ॥ अप्रवृत्तावपि। तद्यथा–'उपरतान्यस्मिन्कुले व्रतानि' 'उपरतः स्वाध्याय' इति। न च तत्र स्वाध्यायो भूतपूर्वो भवति, नापि व्रतानि ॥*॥ भावाऽविरामभावित्वाच्छब्दस्याऽवसानलक्षणं न ॥*॥ भावाऽविरामभावित्वाच्छब्दस्याऽवसानलक्षणं नोपपद्यते ॥ किमिदं 'भावाऽविरामभावित्वा'दिति?॥ भावस्याऽविरामो भावाऽविरामः,भावाऽविरामेण भवतीति भावाऽविरामभावी। भावाऽविरामभाविनो भावो भावाऽविरामभावित्वम् ॥

अपर आह–'भावभावित्वादविरामभावित्वाच्च शब्दस्याऽवसानलक्षणं नोपपद्यते' इति॥*॥ तत्पर इति वा वर्णस्याऽवसानम्॥*॥ विरामपरो वर्णोऽवसानसंज्ञो भवतीति वक्तव्यम् ॥*॥ वर्णोऽन्त्यो वाऽवसानम् ॥*॥ अथ वा

प्र.]स्थानी विवक्ष्यते। ममापीति। अभावो विराम इति पर्यायत्वं मन्यते।आरम्भपूर्वक इति। निवृत्तिर्विरामः, स च प्रवृत्तस्य भवतीति भावः। अवसानलक्षणमिति। अभावोपलक्षितो वर्णोऽवसानं, विरामोपलक्षितो वेति पूर्वं विचारितम्। इदानीं तु तावेव संज्ञित्वेन विचार्येते। 'अभावो लोप' इत्येकस्य संज्ञाद्वयविधानसामर्थ्याद्विषयविभाग आश्रीयते। प्रसक्ताऽभावो लोपसंज्ञः, अभावमवसानसंज्ञमिति।

नावश्यमिति।प्रवृत्तौ सत्यां या निवृत्तिस्तस्यामित्यर्थः।उपरतान्यस्मिन्निति। न प्रवृत्त्य निवृत्तानि। किं तर्हि ?। पूर्वमेवाऽप्राप्तानीत्यर्थः। नियतविषयत्वाच्च शब्दप्रयोगस्य 'शशविषाणमुपरत'मिति प्रयोगाऽभावः। क्वचिद्वनानीति पाठः।

भावाविरामभावित्वादिति। इह शब्दस्य स्वसंबन्धी ह्यभावोऽवसानलक्षणं स्यात्, शब्दान्तरस्य संबन्धी वा। न तावत्स्वसंबन्धी, विरोधात्। नहि यस्य सत्ता तस्य तदानीमेवाऽसत्ता युज्यते। नाऽपि शब्दान्तरसंबन्धी। नहि घटाऽभावः पटस्याऽभावो भवति। भावस्य सत्ताया अविच्छेदेन भवत्यवश्यमिति भावाऽविरामभावी–शब्दः। नहि शब्दस्य भवनकाले सत्ता विच्छिद्यते इत्यर्थः। अपर आहेति।भावाऽविरामशब्दयोर्द्वन्द्व इत्यर्थः। इदानीं लक्षणद्वयस्याऽप्यनुपपत्तिः प्रति-

उ.]रमेः प्रयोगस्य क्वाप्यभावादाह–प्रवृत्तौ सत्यामिति। न प्रवृत्त्य निवृत्तानीति पाठः।उपरतविरतौ च पर्यायौ।क्वचिद्वनानीति पाठ इति।व्रतानीत्यस्य स्थाने तथा पाठ इत्यर्थः।तत्र वनपदं वानप्रस्थाश्रमोपलक्षणम्।एतदन्तेन लक्षणयोः साम्यमुपपादितम्। अथोभयत्रापि दोषं शङ्कते–भावाऽविरामेति। नापि शब्दान्तरेति। 'वावसाने' इत्यादाववसाने स्थितस्येत्यर्थः प्रत्यासत्त्योचितः।एवञ्चतद्वर्णसम्बन्ध्यवसाने इत्यर्थ इति भावः। अविच्छेदेनेति। अविच्छेदाऽविरामौ पर्यायौ, तत्प्रतियोगिनौ

१ क्वचिन्न। २ 'तानि ह्यस्मिन्कुले'। ४ 'वाऽविरामेण भवितुं शीलमस्येति भावाऽविरामी'। ५ 'तत्परो वा वर्णस्या'। ६ 'विरामे'। ७ 'वर्णोऽन्त्योऽवसानम्'। ८ 'प्रवृत्ता'। ९ 'ह्युपरतानीति'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

व्यक्तमेव पठितव्यम्—'अन्त्यो वर्णोऽवसानसंज्ञो भवती'ति ॥ तत्तर्हि वक्तव्यम् ? ॥ न वक्तव्यम् ॥*॥ संहितावसानयोर्लोकविदितत्वात्सिद्धम्[1] ॥*॥ 'संहिताऽवसान'मिति लोकविदितावेतावर्थौ। एवं हि कश्चित्कंचिदधीयानमाह—'शन्नोदेवीयं संहितयाऽधीष्वे'ति। स तत्र परमं सन्निकर्षमधीते[2]। अपर[3] आह—'केनाऽवस्यसी'ति। स[4] आह—अकारेणेकारेणोकारेणेति। एवमेतौ लोकविदितावर्थौ, तयोर्लोकविदितत्वात्सिद्धमिति ॥ [ विरामोऽवसानम् ] ॥ ॥*॥इति श्रीमद्भगवत्पतञ्जलिविरचिते व्याकरणमहाभाष्ये प्रथमस्याध्यायस्य चतुर्थे पादे चतुर्थमाह्निकम् ॥*॥ पादोऽध्यायश्च समाप्तः ॥

प्र.]पाद्यते। भावेन सत्तयाऽविरामेण अविच्छेदेन भवतीत्यर्थः। उपाधिरहितस्याऽभावस्य प्रतीतिर्नास्ति। तत्पर इति वेति। इदानीं शब्दान्तराऽभावपरो वर्णोऽवसानसंज्ञो भवतीति प्रतिपाद्यते। अभावेनापि बुद्धिपरिकल्पितं पौर्वापर्यमाश्रीयते।

अथ वेति। यद्यपि विरामशब्दे करणसाधने आश्रीयमाणेऽयमर्थो लभ्यते,तथापि भावसाधनस्याऽपि संभवात्करणसाधनत्वं संदिग्धमिति 'व्यक्तमेव पठितव्य'मित्युक्तम्। संहितयाधीष्वेति। यथा पदनैरन्तर्ये संहिताव्यवहारस्तथैकपद्येऽपि वर्णनैरन्तर्ये। अवसानशब्दोऽपि विधिप्रदेशेषु भावसाधनः,करणसाधनो वाऽऽश्रयिष्यते इतिनार्थः संज्ञाद्वयविधानेन। तेन विनापीष्टस्य सिद्धत्वात्। इत्युपाध्यायजैयटपुत्रकैयटकृते महाभाष्यप्रदीपे प्रथमाध्यायस्य चतुर्थपादे चतुर्थमाह्निकम्। पादोऽध्यायश्च समाप्तः।

उ.]विच्छेदविरामौ च क्रियाविशेषरूपौ भावपदार्थौ। एतेनाऽभावस्य भावप्रतियोगिकत्वादिदं चिन्त्यमिति परास्तम्। अन्याऽभावपरो वर्ण इत्यादि त्वग्रे वक्ष्यत्येव। इदानीम्—'अपर आहे'ति व्याख्यानकाले। अन्ये तु 'वर्णानामभाव' इत्युक्ते वर्णत्वावच्छिन्नप्रतियोगिताकाऽभाव इत्यर्थः। स च न वर्णसत्त्वे इति भाष्यार्थ इत्याहुः।

ननु शब्दस्य भावाऽविरामभावित्वेप्यभावोऽवसानमिति लक्षणे को दोषस्तत्र शब्दस्याऽनिवेशादित्यत आह—उपाधिरहितस्येति।प्रतियोगिरहितस्येत्यर्थः। शब्दशास्त्रत्वाच्च शब्द एव प्रतियोगीति भावः। विरामोऽभावपदार्थोपि संबन्धादिवदभावसमानाधिकरणत्वाच्च प्रतियोगिसापेक्ष इति भावः। बुद्धिकल्पितेति। बुद्धिदेशेऽग्रेऽभावं दृष्ट्वा तत्र कल्पितं पौर्वापर्यमित्यर्थः। ननु लोके संहिताशब्दः पदनैरन्तर्ये एव प्रसिद्धो न वर्णनैरन्तर्ये इत्यत आह—यथेति। ऐकपद्ये इति। एकपदे इत्यर्थः। भावसाधन इति। अत्र पक्षे खरवसानयोरित्यत्र बौद्धं पौर्वापर्यमाश्रयणीयमिति शिवम्। इति श्रीकालोपनामकशिवभट्टसुतसतीगर्भजनागोजीभट्टकृते भाष्यप्रदीपोद्द्योते प्रथमस्य चतुर्थे चतुर्थमाह्निकम्। ※ इति प्रथमोऽध्यायः। *

१ 'लोकविहितत्वात्सिद्धम्'।२ 'परं संनिकर्ष'।३ 'अपरश्चाह'।४ 'कारेण वेतिसिद्धम्'।

CC0. Vasishtha Tripathi Collection. Digitized by eGangotri

देखिये ! संसार का अद्भुत रत्न !! अवश्य मंगाइए !!!

परीक्षोपयोगी 'उदाहरणार्थ' आदि से सुशोभित

# सिद्धान्तकौमुदी ( कारकान्त भाग )

अध्यापकों व छात्रों को समान रूप से लाभकारी 'शब्देन्दुशेखर' और 'तत्त्वबोधिनी' नामक दो महान् टीकाओं से अलङ्कृत । मूल्य १॥) नेट

अवशिष्ट भाग भी छप रहे हैं ।

---

एक प्रति अवश्य मंगाइए ।

आजतक के छपे व लिखित सभी भाष्यों से शुद्ध

# व्याकरण महाभाष्य

## प्रदीप उद्द्योत ( कैयट-विवरण ) सहित

| | | |
|---|---|---|
| प्रथमाध्याय | ( छप गया ) | २) |
| द्वितीयाध्याय | ( „ ) | १॥।) |
| तृतीयाध्याय | ( „ ) | २) |
| चतुर्थ अध्याय | ( „ ) | १॥) |
| पञ्चम अध्याय | ( „ ) | १॥) |
| षष्ठाध्याय | ( „ ) | २) |
| सप्तमाध्याय | ( „ ) | १॥) |
| अष्टमाध्याय | ( „ ) | १॥) |

महाभाष्य का नवाह्निक भाग—'कैयट' 'उद्द्योत' 'शब्दकौस्तुभ' और 'अभिनवराजलक्ष्मी' टीका से अलङ्कृत—
( शास्त्रीपरीक्षोपयोगी ४ आह्निक बड़ी साइज ) मू० २)
नवाह्निक भाग संपूर्ण „ „ „ ४)

पुस्तक मिलने का पता:—

*श्रीराजस्थान-संस्कृत-कालेज-ग्रन्थमाला,*

२/१ धर्मकूप, मीरघाट, काशी ।

CCO. Vasishtha Tripathi Collection. Digitized by eGangotri

